योग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिपरद्रव्याद्यवच्छिन्ननास्तित्ववि-शिष्टयुगपत्स्वपरद्रव्याद्यवच्छिन्नसत्त्वासत्त्वविषयकावक्तव्यत्ववानिति बोधः ॥ सूत्र-२८ ॥

**स्यान्नास्ति चेति,** निषेधात्मना मुख्यविषयतावच्छिन्ना योभयात्मना युगपदवक्तव्यत्वविषयता तद्वतो बोधोऽस्माद्भवतीत्याशयेनाह–परद्रव्याद्यपेक्षयेति । मतान्तरेण तु घटस्यैको देशो नास्तित्वे नियतोऽपरश्च सत्त्वासत्त्वाभ्यां युगपदादिष्टस्स घटस्तथाविधविकल्पवशात् नास्ति चावक्तव्यश्च भवति, तात्पर्यार्थमाह तथा चेति, शिष्टं स्पष्टम् ॥

### છટ્ઠા ભંગને વાક્યાર્થ.

**ભાવાર્થ**–"સ્યાન્નાસ્તિ ચ અવક્તવ્યશ્ચ' આવું છટ્ઠું વાક્ય, પરદ્રવ્યાદિની અપેક્ષાએ નાસ્તિત્વવિશિષ્ટ, એકીસાથે પ્રધાનતાથી સ્વ-પરદ્રવ્ય આદિની અવક્તવ્યત્વવિશિષ્ટ ઘટને કહે છે.

તથાચ તાદૃશ ઘટ, પ્રતિયોગીનો અસમાનાધિકરણ ઘટત્વ સમાનાધિકરણ જે અત્યંત અભાવ(ઉદાસીન અભાવ)ના અપ્રતિયોગી પરદ્રવ્ય આદિથી અવચ્છિન્ન નાસ્તિત્વવિશિષ્ટ, એકીસાથે સ્વ-પરદ્રવ્યાદિથી અવચ્છિન્ન સત્ત્વ-અસત્ત્વાવિષયક અવક્તવ્યત્વવાળો છે, એવો બોધ છે.

**વિવેચન**–નિષેધરૂપે મુખ્યવિષયતાથી અવચ્છિન્ન, જે ઉભયરૂપે એકીસાથે અવક્તવ્યત્વની વિષયતા, તે વિષયતાવાળાનો બોધ આ વાક્યથી થાય છે. મતાન્તરથી તો ઘટનો એકદેશ નાસ્તિત્વમાં નિયત છે અને બીજો એકીસાથે સત્ત્વ-અસત્ત્વથી વિવક્ષિત તે ઘટ, તથાવિધ વિકલ્પના વશે 'નાસ્તિ ચ અવક્તવ્યશ્ચ' થાય છે. તાત્પર્યને કહે છે કે-'તથાચ' ઇતિ, બાકીનું સ્પષ્ટ છે.

अथ सप्तमभङ्गवाक्यार्थमाह—

**स्यादस्ति नास्ति चावक्तव्यश्च घट इति सप्तमं वाक्यन्तु क्रमार्पितस्वपरद्रव्यादीन् सहार्पितस्वपरद्रव्यादीनाश्रित्यास्तित्वनास्तित्वविशिष्टावक्तव्यत्ववद्घटमाह । तथा च तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिक्रमार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयविशिष्टसहार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयधर्मविषयकावक्तव्यत्ववान् घट इति बोधः ॥ सूत्र-२९ ॥**

**स्यादिति,** क्रमादुभयमुख्यविषयताद्वयावच्छिन्नावक्तव्यत्वमुख्यविषयताको बोधोऽस्य फलमित्याशयेनाह–क्रमार्पितेति, मतान्तरेण तु यस्यैको देशोऽस्तित्वेऽपरो नास्तित्वेऽन्यश्चोभयथा नियतस्तादृशो घटो विकल्पवशादस्तिनास्त्यवक्तव्यश्च भवतीति । भावार्थमाह तथा चेति स्पष्टम् । वाक्येष्वेषु सप्तसु नयविभागस्तु सामान्यग्राहिणि सङ्ग्रहे प्रथमो भङ्गः, विशेषग्राहिणि व्यवहारे द्वितीयः सङ्ग्रहव्यवहारयोस्तृतीयः, सूक्ष्मवर्त्तमानक्षणग्राहिणि ऋजुसूत्रे चतुर्थः एकदोभयार्पणाया वर्त्तमानक्षणनियतत्वात, पञ्चमस्सङ्ग्रहर्जुसूत्रयोः, षष्ठो व्यवहारर्जुसूत्रयोः, सप्तमस्तु सङ्ग्रहव्यवहारर्जुसूत्रेष्विति । एते त्रयो नया

वक्त्रभिप्रायरूपत्वादर्थनयाः, प्रथमद्वितीयावेव भङ्गौ शब्दादिषु त्रिषु नयेष्वपीति केचित् ॥

## સાતમા ભંગનો વાક્યાર્થ.

**ભાવાર્થ**–"'स्याद् अस्ति नास्ति च अवक्तव्यश्च घटः' આ સાતમું વાક્ય તો ક્રમથી અર્પિત્ સ્વ-પરદ્રવ્યાદિની, સહ અર્પિત સ્વ-પરદ્રવ્યાદિની અપેક્ષા કરીને અસ્તિત્વ-નાસ્તિત્વ-વિશિષ્ટ અવક્તવ્યત્વવાળા ઘટને કહે છે. તથાચ તાદૃશ ઘટ, પ્રતિયોગિનો અસમાનાધિકરણ, ઘટત્વનો સમાનાધિકરણ, જે અત્યંત અભાવ(ઉદાસીન અભાવ)ના અપ્રતિયોગિ ક્રમાર્પિત સ્વ-પરદ્રવ્યાદિથી અવચ્છિન્ન અસ્તિત્વ-નાસ્તિત્વ ઉભયવિશિષ્ટ, સહ અર્પિત સ્વ-પરદ્રવ્યાદિથી અવચ્છિન્ન અસ્તિત્વ-નાસ્તિત્વ ઉભય ધર્મવિષયવાળા અવક્તવ્યત્વવાળો ઘટ છે, એવો બોધ થાય છે."

**વિવેચન**–ક્રમથી ઉભય મુખ્ય વિષય દ્વયતાથી અવચ્છિન્ન-અવક્તવ્યત્વ મુખ્ય વિષયતાવાળો બોધ, આ ભંગનું ફળ છે. આવા આશયથી કહે છે કે-'ક્રમથી અર્પિત' ઇત્યાદિ.

મતાન્તરથી તો જેનો એક દેશ અસ્તિત્વમાં, બીજો નાસ્તિત્વમાં અને ત્રીજો ઉભય પ્રકારે નિયત છે. તાદૃશ ઘટ વિકલ્પના વશે 'अस्ति नास्ति च अवक्तव्यश्च' થાય છે.

૦ આ સાત વાક્યોમાં નયવિભાગ તો સામાન્યગ્રાહક સંગ્રહનયની અપેક્ષાએ પ્રથમ ભંગ છે.

વિશેષગ્રાહક વ્યવહારનયની અપેક્ષાએ બીજો ભંગ છે.

સંગ્રહ-વ્યવહારરૂપ બંને નયોની અપેક્ષાએ ત્રીજો ભંગ છે.

સૂક્ષ્મ વર્તમાન ક્ષણગ્રાહક ઋજુસૂત્રનયની અપેક્ષાએ ચોથો ભંગ છે, કેમ કે-એક સમયમાં ઉભયની વિવક્ષા વર્તમાન ક્ષણનિયત છે.

સંગ્રહ-ઋજુસૂત્રની અપેક્ષાએ પાંચમો ભંગ છે.

વ્યવહાર-ઋજુસૂત્રની અપેક્ષાએ છટ્ઠો ભંગ છે.

સંગ્રહ-વ્યવહાર-ઋજુસૂત્ર, એમ ત્રણની અપેક્ષાએ સાતમો ભંગ છે.

આ ત્રણ નયો વક્તાના અભિપ્રાયરૂપ હોઈ અર્થનયો છે.

૦ પ્રથમ-દ્વિતીયરૂપ બે ભંગો શબ્દ આદિ ત્રણ નયોમાં છે, એમ પણ કેટલાક કહે છે.

---

१. अयम्भावः अर्थप्रधानो वक्त्रभिप्रायोऽर्थनयः सङ्ग्रहादिः, व्यञ्जनस्य परार्थत्वात्तच्छ्रवणसम्भूतः शब्दादिश्रोत्रभिप्रायस्तु शब्दप्रभवमर्थमुपसर्जनतया व्यवस्थापयति, अतस्स शब्दनयश्शब्दसमभिरूढैवम्भूतभेदभिन्नः । तत्र वचनमार्गश्च सविकल्पनिर्विकल्पकभेदेन द्विविधः, सविकल्पं सामान्यं निर्विकल्पः पर्यायः, तत्प्रतिपादकत्वाद्वचनमपि तथा सञ्ज्ञाक्रियाभेदेनाभिन्नार्थप्रतिपादकावपि शब्दसमभिरूढौ भेदजिज्ञासारूपविकल्पसाहित्यात्तदभिप्रायेण सविकल्पको वचनमार्गः प्रथमभङ्गकरूपः, एवम्भूतस्तु क्रियाभेदाद्भिन्नमेवार्थं तत्क्षणे प्रतिपादयतीति तदुत्तर भेदजिज्ञासारूपविकल्पविरहान्निर्विकल्पो द्वितीयभङ्गरूपो वचनमार्गः । अवक्तव्यत्वभङ्गस्तु व्यञ्जननये न सम्भवत्येव व्यञ्जननयस्य श्रोत्रभिप्रायत्वेन तत्र शब्दाभावात् तथा चैतन्नये प्रथमद्वितीयावेव भङ्गाविति ॥

ननु पूर्वोदितेषु भङ्गेषु सत्त्वाद्यवच्छेदकतया स्वद्रव्यक्षेत्रकालभावा उक्ताः तेषां स्वत्वपरत्वविवेकाय प्रथमं भावपदवाच्यं स्वरूपं दर्शयत्यसाधारणत्वादादौ—

**अत्र सर्वत्र घटस्य स्वरूपमयं घट इति ज्ञानीयप्रकारताश्रयान्यूनानतिप्रसक्तं घटत्वमेव, तादृशप्रकारत्वानाश्रयं विशेष्यावृत्ति च पटत्वादिकं पररूपं, नतु तद्भिन्नत्वमात्रं, द्रव्यत्वादीनां पररूपत्वापत्तेः । घटादीनाञ्च पररूपादिनापि सत्त्वे पदार्थत्वव्याघातप्रसङ्गः, स्वपररूपग्रहण-व्यवच्छेदाभ्यां हि पदार्थत्वं व्यवस्थाप्यम् ॥ सूत्र-३० ॥**

**अत्र सर्वत्रेति** । पूर्वोदितेषु सप्तसु भङ्गेष्वित्यर्थः, अयं घट इति ज्ञानीयप्रकारतेति, तादृग्ज्ञान-निरूपितप्रकारताश्रयत्वे सति अन्यूनानतिप्रसक्तत्वं घटत्वस्यैव घटमात्रवृत्तित्वे सति घटेतरावृत्तित्वात्, तस्मात्सदृशपरिणामलक्षणो घटत्वरूपो धर्मो घटस्य स्वरूपमिति भावः । पररूपमाह तादृशेति, अयं घट इति ज्ञाननिरूपितेत्यर्थः, तथा च तादृशप्रकारत्वानाश्रयत्वं पटत्वादावेव, ते च पटत्वादयः विशेष्ये घटे न वर्त्तन्त इति पररूपा भवन्तीति भावः । तादृशप्रकारत्वाश्रयभिन्नत्वमात्रं तु न पररूपत्वं तस्य द्रव्यत्वा-दावपि सत्त्वेन पररूपत्वापत्तेरित्याह न तु तद्भिन्नत्वमात्रमिति, हेतुमाह द्रव्यत्वादीनामिति, ननु घटादिक-मस्ति नास्तीति वदताऽस्तित्वं नास्तित्वञ्च वस्तुधर्मतयाऽभ्युपगतं भवेत् तत्कथमेकमेव घटादिकं वस्तु सच्चासच्चस्यात् सत्त्वस्यासत्त्वपरिहारेणासत्त्वस्य च सत्त्वपरिहारेण व्यवस्थितत्वात्, अन्यथा तयोरविशेषः स्यात्, तथा च घटादिकं यदि सत्तर्हि कथमसत्, यदि चासत् कथं सदेकत्र सदसत्त्वयोर्विरोधा-दित्याशंकायामाह घटादीनाञ्चेति, निरवच्छिन्नसत्त्वासत्त्वयोरप्रमाणिकत्वेन स्वरूपादिघटितमूर्त्तेरेव सत्त्वादेः प्रतीतेः घटादिकं वस्तु स्वरूपेणास्ति पररूपेण नास्तीत्येव वस्तुतत्त्वं, स्वरूपेणेव पररूपेणापि सत्त्वे घटोऽप्यघटः स्यात्, अघटस्वरूपपटादिवत्, पररूपेणेव स्वरूपेणाप्यसत्त्वे घटादिकं घटवस्त्वेव न स्यात् स्वस्वभावादिनाप्यसत्त्वात् खरविषाणवदिति इतरेतररूपापत्त्या पदार्थस्वरूपहानिप्रसङ्ग इति भावः, घटाद्यात्मकत्वञ्च स्वस्वभावादिरूपेण ग्रहणात्परस्वभावादिना व्यवच्छेदाच्च सम्भवति नान्यथेत्याशयेनाह स्वपरेति, न चैकत्र वस्तुनि सत्त्वमसत्त्वञ्च परस्परविरुद्धधर्मयोस्सामानाधिकरण्यायोगाद्युक्तिविरुद्धमिति वाच्यम्, स्वरूपपररूपाभ्यां विवक्षितयोस्तयोश्शीतोष्णस्पर्शवद्भिन्नाधिकरणत्वाप्रतीत्या विरोधासिद्धेः, तादृशयोस्तयोरेकाधिकरणत्वधीसद्भावात्, न च दृष्टेऽनुपपन्नं नाम, स्पष्टास्पष्टविषयतया भिन्नस्वभावत्वेन सिद्धयोः प्रत्यक्षशाब्दबोधयोरेकविषयत्वस्य एकद्रव्याश्रयत्वस्य चेव सत्त्वासत्त्वयोरेकाश्रयत्वस्याविरुद्धत्वात् । न च स्वस्वभावादिना सत्त्वमेव परस्वभावादिनाऽसत्त्वं स्यान्न ततो भिन्नमिति वाच्यम् . तस्यैकस्वभाव-

---

१ न चैकस्मिन्नपि द्रव्ये प्रत्यक्षविषयता भिन्नकाले भिन्नकाले च शाब्दीविषयतेति यकालभेदान्न तयोर्विरोध इति वाच्यमेककालावच्छेदेन चित्रज्ञाने नीलतदितरविषयत्वयोर्विरोधेनाभानापत्तेः, न च तत्र तथाप्रतीतिरेवाविरोधसाधिका तयोरिति वाच्यं प्रकृतेऽपि तुल्यत्वात् । किञ्च भावाभावयोर्विरोधस्यापि तत्तत्प्रतियोगिघटितत्वेन विशेष एव विश्रान्ततया जात्यन्तरभूते वस्तुनि तदेकदेशसत्त्वासत्त्वयोर्विरोधकल्पन एव लाघवमिति ॥

त्वेऽवस्तुत्वप्रसङ्गात्, यदि हि घटत्वादिना सत्त्वमेव पटत्वाद्यवच्छिन्नासत्त्वं स्यात् तदा पटत्वादिनापि सन् स्यात् पटत्वाद्यवच्छिन्नासत्त्वस्य घटत्वावच्छिन्नसत्त्वाव्यतिरिक्तत्वात्, तथा घटत्वेनाप्यसन् स्यात् पटत्वाद्यवच्छिन्नासत्त्वाभिन्नत्वाद्घटत्वावच्छिन्नसत्त्वस्य, तथा च तदितररूपापत्त्यादिनाऽपदार्थत्वप्रसङ्गो दुर्वार एव स्यात्। ननु निरुपाख्यं किञ्चित् पररूपाद्यसत्त्वं नास्त्येव येनाव्यतिरिक्तत्वविकल्पकल्पनयाऽवस्तुत्वापत्तिस्स्यात्, किन्तु स्वरूपादिसत्त्वमेव विशिष्टमेकस्वभावं पररूपाद्यसत्त्वमुच्यते, अतो नोक्तदोष इति चेन्मैवम्, स्ववाचैवानेकान्तत्वप्रतिपादनात्, विशिष्टं स्वरूपावच्छिन्नसत्त्वमेव पररूपाद्यवच्छिन्नासत्त्वमुच्यते सदसद्रूपत्वञ्च वस्तुनो न प्रतिपद्यत इति चित्रम्, स्वपररूपाद्यवच्छिन्नसत्त्वासत्त्वोभयरूपतामन्तरा वस्तुनो विशिष्टताया असम्भवात्। नन्वेवमपि सदसद्रूपं वस्तु न सम्भवति, तथाहि असदिति प्रसज्यप्रतिषेधो वा स्यात्पर्युदासो वा, किञ्चातः, उभयत्र दोषात् सन्न भवतीत्यसदिति प्रसज्यप्रतिषेधे सन्निवृत्तिरूपनिरुपाख्यस्यासत्त्वेन प्रमाणागोचरत्वाद्वस्तुधर्मत्वानुपपत्तेः, तत्त्वेऽभ्युपगम्यमाने वा निरुपाख्यधर्मवतस्सोपाख्यत्वासम्भवेन वस्त्वपि निरुपाख्यं स्यात्, सतोऽन्यदसदिति पर्युदासाश्रयणे सदन्तरमसद्भवति, एवमपि वस्तुनस्सदात्मकत्वेन सतोऽन्यत्वाभावान्न सदसदात्मकं, नहि सत् सदन्तरात्मकमिति चेन्न उभयपक्षाश्रयणेऽपि वस्तुनस्सदसदात्मकत्वात्, सत्त्वाननुविद्धस्यासत्त्वस्याभावेन सन्न भवतीत्यत्रापि परद्रव्यादिरूपेण सत एव प्रतिषेधात् तस्य[२] च तत्रासत्त्वात्तत्स्वरूपस्य च सत्त्वानुवेधान्न निरुपाख्यमेव तदसत्त्वमिति न तत्पक्षोपक्षिप्तदोषप्रसक्तिः, पर्युदासपक्षदोषस्तु अनभ्युपगमादेव निरस्तः। तथा च सदसदात्मकं वस्तु, तत्र[३] न स्वरूपसत्त्वासम्पृक्तं पररूपासत्त्वं नवा पररूपासत्त्वासम्पृक्तं स्वरूपसत्त्वं, न चानयोरेकत्वमेव, अविगानेन सम्यगुभयोपलब्धेः, न च नानात्वमेव, तद्व्यवस्थाऽयोगात् तथानुपलब्धेश्चेत्यन्योऽन्यानुविद्धं भेदाभेदवृत्तितत्स्वभावं विशिष्टमुभयमेव तत् अन्यथा वस्तूनां वैशिष्ट्यानुपपत्तेरिति। ननु भवतु सत्त्वमसत्त्वञ्च वस्तुधर्मौ वस्तुस्वरूपत्वं तयोः कथम्, तथाहि धर्मधर्मिणोः किन्तावद्भेद उताभेद आहोस्विद्भेदाभेदो वा, नाद्यः, वस्तुनस्सदसदात्मकत्वासम्भवात् न द्वितीयः, एकधर्म्यभिन्नत्वात्तयोरैक्यापत्तेस्तत्स्वरूपवत्, धर्मिणो वा भेदस्स्यात् सदसत्त्वयोर्भेदात्[४] नापि तृतीयः, येनाकारेण भेदस्तेन भेदैकान्त्यात् येन चाकारेणाभेदस्तेनाभेदैकान्त्यात्, तथाप्येकस्योभयरूपत्वासम्भवात्, न च येनैवाकारेण भेदस्तेनैवाभेदो येन चाभेदस्तेन भेद इति वक्तुं युज्यते विरो-

१. निरुपाख्य–निःस्वभावम्. पररूपाद्यसत्त्वं–पररूपाद्यवच्छिन्नः सत्त्वाभावः बौद्धमतेनायं पूर्वपक्षः। विशिष्टमेकस्वभावं–स्वेतरसकलव्यावृत्तिरूपं सदेकस्वभावम् ॥ २. परद्रव्यादिरूपेण सतः पटादेस्स्वद्रव्यादिरूपेण सति घटे प्रतिषेधः क्रियते पररूपाद्यवच्छिन्नसत्त्वस्य च घटेऽभावात् तदप्यसत्त्वं न निरुपाख्यं तत्स्वरूपसत्त्वस्यानुवेधात् सत्त्वाभावो हि घटात्मकः तस्मात्तत्सत्त्वेन सोऽनुविद्ध इति न निरुपाख्य इति भावः ॥ ३. घटो हि स्वरूपेणास्ति, पररूपाद्यवच्छिन्नपटाद्यात्मकस्तु न भवति एवञ्च सत्त्वं तत्प्रतिषेधश्च घटस्वरूपमतस्सत्त्वमसत्त्वानुविद्धमसत्त्वञ्च सत्त्वानुविद्धमिति भावः ॥ ४. सत्त्वासत्त्वयोर्भिन्नत्वादिति भावः। ऐक्यापत्तेरिति, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति ॥

धादिति चेन्नैवम्, प्राथमिकविकल्पद्वयोक्तदोषस्यानभ्युपगमतिरस्कृतत्वात् भेदाभेदपक्षस्यैवाभ्युपगमात्। न चात्रापि दोष उक्त एवेति वाच्यम्, अन्योऽन्यव्याप्तिभावेनास्य जात्यन्तरात्मकत्वेन केवलभेदाभेद-प्रत्युक्तदोषस्यात्रानवतारात्। तस्माद्येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एवेत्यत्यन्त-परित्यक्तानेकान्तवादविषयमेतत्। अभेदाननुविद्धस्य केवलभेदस्य भेदाव्याप्यस्याभेदस्य चाप्रसिद्धेः, न च येनाकारेण भेदस्तेनैवाभेद इत्याद्यपि साम्प्रतम्, सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः, तर्हि कथं धर्मधर्मिणोर्भेदाभेद इति चेत्कथञ्चिद्भेदः कथञ्चिदभेद इति गृहाण, धर्माणां मिथो भेदात्प्रतिनियत-धर्म्याश्रितत्वाच्च कथञ्चिद्भेदः धर्माणां धर्मिणा सर्वथैकत्वे धर्मतयापि भेदासम्भवात्, तथा धर्माणा-मेवाभ्यन्तरीकृतधर्मिस्वरूपत्वात् धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वात्कथञ्चिदभेदः, अत्यन्तभेदे धर्म-धर्मिकल्पनाऽसम्भवात्, अतिप्रसङ्गात्, अनुवृत्तव्यावृत्तस्य च वस्तुनोऽध्यक्षसिद्धत्वेन न भेदाभेदस्यो-त्प्रेक्षितत्वमपि, अनुभवो हि पुरोऽवस्थिते घटादौ तदतद्रूप एवोपजायते, अन्यथा वस्त्वभावप्रसङ्गादिति। ननु जीवादीनां द्रव्यत्वावच्छिन्नानां सत्त्वासत्त्वादिसप्तभङ्गीसाधने किं स्वद्रव्यं किं वा परद्रव्यं, तदव-च्छिन्नभेदाप्रसिद्ध्या परत्वस्य तदभावे च स्वत्वस्य दुर्वचत्वादिति चेदुच्यते शुद्धं द्रव्यं स्वं सत्त्वावच्छेदकं, अशुद्धञ्च परमसद्रूप्यं असत्त्वावच्छेदकं, शुद्धत्वाशुद्धत्वे च भेदाभेदप्रधानव्यवहारनिश्चयसाक्षिकाखण्डो-पाधिरूपे, न च शुद्धद्रव्यस्य स्वपरद्रव्यव्यवस्था कथं, तस्य द्रव्यक्षेत्रकालभावात्मकत्वादिति वाच्यम्, सकलद्रव्यक्षेत्रकालभावरूपं व्यापकं स्वद्रव्यं विकलद्रव्यादिकं परद्रव्यमित्यङ्गीकारादेवमन्यत्रापि भाव्यं ॥

પૂર્વે કહેલ ભંગોમાં સત્ત્વ આદિના અવચ્છેદપણાએ સ્વદ્રવ્ય-ક્ષેત્ર-કાળ-ભાવો કહેલ છે. તેઓના સત્ત્વ-પરત્વના વિવેક માટે પહેલાં ભાવપદથી વાચ્ય સ્વરૂપને અસાધારણ હોવાથી આદિમાં દર્શાવે છે.

## ઘટનું સ્વરૂપ.

**ભાવાર્થ**-"અહીં સઘળે ઠેકાણે ઘટનું સ્વરૂપ, 'આ ઘટ છે' આ પ્રમાણે જ્ઞાનનિરૂપિત પ્રકારતાશ્રય, અન્યૂન અનધિક ઘટત્વરૂપ જ છે. તાદૃશ પ્રકારતાનો અનાશ્રય, વિશેષ્યમાં અવૃત્તિ, પરત્વ આદિક પરરૂપ છે; પરંતુ તદ્ભિન્નત્વ માત્ર નહિ, કેમ કે-દ્રવ્યત્વ આદિમાં પરરૂપપણાની આપત્તિ આવે છે. વળી ઘટ આદિમાં પરરૂપ આદિની અપેક્ષાએ સત્ત્વની માન્યતામાં પદાર્થપણાના વ્યાઘાતનો પ્રસંગ આવે છે. ખરેખર, સ્વરૂપના ગ્રહણથી અને પરરૂપના વ્યવચ્છેદથી પદાર્થપણું વ્યવસ્થાપનયોગ્ય છે."

---

१. स्वभावस्य धर्मत्वेन धर्मधर्मिणोरेकान्तभेदे धर्मिणो निरस्वभावत्वं स्यात् तथा च ज्ञेयत्वादिधर्माननुवेधाद्धर्मिणोऽभावप्रसङ्गः, तदभावादेव च धर्माणां निराश्रयत्वादाश्रयं विना ग्रहणासम्भवादभावप्रसङ्ग इत्यतिप्रसङ्गपदार्थः ॥ २. ज्ञानवेद्या हि वस्तुव्यवस्थितिः नहि भेदाभेदात्मकत्वं संवेद्यते, उभयरूपस्य संवेदनस्याभावादित्याशंकायामाहानुभवो हीति ॥ ३. भाव एव हि द्रवन्ति द्रोष्यन्ति अदुद्रुवन्निति द्रव्यं, क्षीयन्ते क्षेष्यन्ति क्षिताश्चास्मिन् पदार्था इति क्षेत्रं, कल्यन्ते कलयिष्यन्ते कलिताश्चारभादिति कालः, भवन्ति भविष्यन्त्यभूवन्निति भावः पर्याय इति सत्त्वैव द्रव्यक्षेत्रकालभावात्मना विशेष्यते तस्या एव तथा व्यवहारविषयत्वघटनादिति ॥

**વિવેચન**-પૂર્વકથિત સાત ભંગોમાં, 'अयं घट इति ज्ञानीयप्रकार तेति' તાદૃશ જ્ઞાન-નિરૂપિત-પ્રકારતાનો આશ્રય હોયે છતે, અન્યૂન-અનતિપ્રસક્ત ઘટત્વ જ ઘટનું સ્વરૂપ છે, કેમ કે-ઘટત્વ જ ઘટ માત્રમાં વર્તમાન હોયે છતે ઘટથી ઈતરમાં અવર્ત્તમાન છે. તેથી સદૃશ પરિણામ લક્ષણવાળો ઘટત્વરૂપ ધર્મ ઘટનું સ્વરૂપ છે.

પરરૂપને કહે છે કે-'तादृशे' ત્તિ, જ્ઞાનનિરૂપિત-પ્રકારતાનું અનાશ્રયપણું પટત્વ આદિમાં જ છે અને તે પટત્વ વગેરે વિશેષ્યભૂત ઘટમાં નથી વર્ત્તતા, માટે પરરૂપ થાય છે.

० તાદૃશ પ્રકારતાશ્રય ભિન્નત્વ માત્ર પરરૂપપણું નથી, કેમ કે-તાદૃશ ભિન્નપણું દ્રવ્યત્વ આદિમાં વિદ્યમાન હોઈ પરરૂપપણાની આપત્તિ આવે છે.

**શંકા**-ઘટ વગેરે વસ્તુ છે-નથી, એમ વદનારે અસ્તિત્વ અને નાસ્તિત્વ વસ્તુના ધર્મરૂપે માનેલ છે, તો કેવી રીતે એક જ ઘટ આદિ વસ્તુ સત્ અને અસત્ થાય? કેમ કે-સત્ત્વની અસત્ત્વના પરિહારપૂર્વક અને અસત્ત્વની સત્ત્વના પરિહારપૂર્વકની વ્યવસ્થા છે. અન્યથા, જો આવી વ્યવસ્થા ન માનવામાં આવે, તો તે બન્નેનો વિશેષ ઉડી જાય છે. તથાચ જો ઘટ આદિક સત્ છે, તો અસત્ કેવી રીતે? જો અસત્ છે, તો સત્ કેવી રીતે? કેમ કે-એક ઠેકાણે સત્ત્વ અને અસત્ત્વનો વિરોધ છે ને?

**સમાધાન**-નિરવચ્છિન્ન (નિરપેક્ષ) સત્ત્વ અને અસત્ત્વ અપ્રમાણિક છે, કેમ કે-સ્વરૂપ આદિ ઘટિત આકારવાળા જ સત્વ આદિની પ્રતીતિ છે. ઘટ આદિક વસ્તુ સ્વરૂપથી છે-પરરૂપથી નથી. આવું જ વસ્તુનું સ્વરૂપ છે. જેમ સ્વરૂપથી છે, તેમ પરરૂપથી પણ છે. એ માનતાં ઘટ પણ અઘટ થશે! જેમ કે-અઘટસ્વરૂપ પટાદિ પરરૂપથી નથી, તેમ સ્વ-રૂપથી પણ નથી. એ માનતાં ઘટ આદિક ઘટ વસ્તુ જ નહીં થાય! કેમ કે-સ્વસ્વભાવ આદિની અપેક્ષાએ પણ અસત્ માનતાં ગધેડાના શીંગડાની જેમ અસત્ થશે! આવી રીતે સત્ અસત્ થશે! અસત્ સત્ થશે! એટલે પરસ્પર રૂપની આપત્તિ થવાથી પદાર્થસ્વરૂપની હાનિનો પ્રસંગ આવશે જ.

**શંકા**-એક વસ્તુમાં સત્ત્વ અને અસત્ત્વ યુક્તિવિરૂદ્ધ છે, કેમ કે-પરસ્પરવિરોધી બે ધર્મોનું સામાનાધિકરણ્ય કેવી રીતે સંભવી શકે?

**સમાધાન**-સ્વરૂપ અને પરરૂપથી વિવક્ષિત સત્ત્વ અને અસત્ત્વમાં, શીત અને ઉષ્ણ-સ્પર્શની માફક ભિન્ન અધિકરણતાની અપ્રતીતિ હોવાથી, વિરોધની અસિદ્ધ હોઈ સામાના-ધિકરણ્ય સંભવી શકે છે, કેમ કે-સ્વરૂપ-પરરૂપથી વિવક્ષિત તે બંનેમાં એકાધિકરણતાની બુદ્ધિનો સદ્ભાવ છે. પ્રત્યક્ષ પ્રમાણથી દૃષ્ટપદાર્થ અનુપપન્ન મનાતો નથી પરંતુ યુક્તિ યુક્ત મનાય છે. જેમ કે-સ્પષ્ટ અને અસ્પષ્ટ વિષયપણાએ ભિન્ન સ્વભાવરૂપે સિદ્ધ પ્રત્યક્ષ જ્ઞાન અને શાબ્દબોધની એકવિષયતા એકદ્રવ્યાધિકરણતા છે, તેમ સત્ત્વ અને અસત્ત્વની એક-અધિકરણતા અવિરૂદ્ધ છે.

[આવું નહીં બોલવું કે-'એક પણ દ્રવ્યમાં પ્રત્યક્ષવિષયતા ભિન્ન કાળમાં અને શાબ્દ-વિષયતા ભિન્ન કાળમાં છે, કેમ કે-કાળના ભેદથી તે બન્નેમાં વિરોધ નથી.' જેમ કે-એક કાળની અપેક્ષાએ નીલ તથા તેનાથી ભિન્ન સકલ વર્ણોની વિષયતામાં વિરોધથી ભાનની પ્રાપ્તિ નથી. એમ પણ નહીં કહેવું કે-'ત્યાં તથાપ્રતીતિ જ તે નીલતદિતરવિષયતામાં અવિ-રોધસાધિકા છે.' તો પછી પ્રકૃતમાં પણ તુલ્યતા જ છે. વળી ભાવ અને અભાવના વિરોધ પણ તે તે પ્રતિયોગિના ઘટિતપણાએ કરી વિશેષમાં જ વિશ્રાન્ત હોઈ, જાત્યંતરભૂત વસ્તુમાં તે વસ્તુના એકદેશ (અવયવ) સત્ત્વ અને અસત્ત્વમાં અવિરોધની કલ્પનામાં લઘુતા છે.]

**શંકા**-સ્વસ્વભાવ આદિથી સત્ત્વ જ પરસ્વભાવ આદિથી અસત્ત્વ છે. તેનાથી ભિન્ન નથી, એમ માનીએ તો શો વાંધો ?

**સમાધાન**-તે બન્ને એકસ્વભાવવાળા માનવામાં વસ્તુત્વનો અભાવ થાય એ જ મોટો વાંધો છે. ખરેખર, જો ઘટત્વ આદિથી સત્ત્વ જ, પટત્વ આદિથી અવચ્છિન્ન અસત્ત્વ છે એમ કહો-તો પટત્વ આદિથી ઘટ સત્ થઈ જાય ! કેમ કે-ઘટત્વથી અવચ્છિન્ન સત્ત્વની સાથે પટત્વ આદિથી અવચ્છિન્ન-અસત્ત્વ અભિન્ન છે. તેવી જ રીતે ઘટત્વથી પણ 'ઘડો અસત્' થશે ! કેમ કે-ઘટત્વથી અવચ્છિન્ન સત્ત્વ, પટત્વ આદિથી અવચ્છિન્ન અસત્ત્વની સાથે અભિન્ન છે. તથાચ તેનાથી ઇતર રૂપની આપત્તિ આદિથી અપદાર્થપણાનો પ્રસંગ દુર્વાર જ થશે !

**શંકા**-નિરૂપાખ્ય (નિરૂપાખ્ય એટલે સ્વભાવ વગરનું, પરરૂપાદ્ય સત્ત્વ એટલે પરરૂપ આદિથી અવચ્છિન્ન સત્ત્વનો અભાવ, આ બૌદ્ધમતની અપેક્ષાએ પૂર્વપક્ષ, વિશિષ્ટ એક-સ્વભાવવાળું એટલે સ્વથી ઇતર સકલવ્યાવૃત્તિરૂપ હોતું એકસ્વભાવવાળું) કાંઈ પરરૂપ આદિથી અસત્ત્વ નથી જ, જેથી અભિન્નત્વ વિકલ્પ કલ્પનાથી અવસ્તુત્વની આપત્તિ થઈ શકે ! પરંતુ સ્વરૂપ આદિથી સત્ત્વ જ, વિશિષ્ટ એકસ્વભાવવાળું પરરૂપાદિથી અસત્ત્વ કહેવાય છે, માટે ઉક્ત દોષ કેવી રીતે ?

**સમાધાન**-પોતાના વચનથી જ અનેકાન્તપણાનું પ્રતિપાદન કરો છો તે ઠીક છે. તમો એક બાજુથી વિશિષ્ટ સ્વરૂપ આદિથી અવચ્છિન્ન સત્ત્વને જ પરરૂપ આદિથી અવ-ચ્છિન્ન અસત્ત્વ તરીકે કહો છો અને બીજી બાજુથી વસ્તુનું સદ્-અસદ્રૂપપણું માનતાં નથી એ મોટું આશ્ચર્ય છે, કેમ કે-સ્વ-પરરૂપ આદિથી અવચ્છિન્ન સત્ત્વ-અસત્ત્વોભયરૂપતા સિવાય વસ્તુની વિશિષ્ટતાનો અસંભવ છે.

**શંકા**-આ પ્રમાણે પણ સદ્-અસદ્રૂપ વસ્તુ સંભવતી નથી. તે આ પ્રમાણે:-'અસદ્' અહીં પ્રસજ્યરૂપ પ્રતિષેધ લો કે પર્યુદાસરૂપ પ્રતિષેધ લો, આ બન્ને પ્રતિષેધના સ્વીકારમાં દોષ છે. પ્રસજ્યપ્રતિષેધ=સત્ નહીં તે અસત્, આવા પ્રસજ્યપ્રતિષેધમાં સત્‌ની નિવૃત્તિરૂપ નિરૂપાખ્યની અવિદ્યમાનતા છે, કેમ કે-પ્રમાણના અવિષયભૂત હોઈ વસ્તુધર્મ તરીકે યુક્તિ-યુક્ત નથી. અથવા સત્‌ના અભાવરૂપ નિરૂપાખ્યની વિદ્યમાનતાનો જો સ્વીકાર કરવામાં આવે,

તો નિરૂપાખ્ય ધર્મવાળામાં સોપાખ્ય(સ્વભાવવત્ત્વ)પણાનો અસંભવ હોઈ, વસ્તુ પણ નિરૂપાખ્ય (નિઃસ્વભાવ) થઈ જાય !

પર્યુદાસરૂપ નઞ્ના સ્વીકારમાં=સત્‌થી (સદૃશ) અલગ તે અસત્. આ પ્રમાણે પર્યુદાસના પક્ષમાં સત્‌થી બીજું અથવા બીજું સત્ (સત્‌સમાન) અસત્ થાય છે. આ પ્રમાણે પણ વસ્તુનું સદ્ આત્મકપણું હોવાથી સત્‌થી અન્યતાનો અભાવ હોવાથી સદ્, અસદ્ આત્મક વસ્તુ નથી, કેમ કે—સત્ સદન્યાત્મક નથી જ ને ?

**સમાધાન**—નિષેધના બે પક્ષની અપેક્ષાએ પણ વસ્તુ, સદ્—અસદ્ આત્મક છે, કેમ કે—સત્ત્વથી અનનુવિદ્ધ (અનનુસ્યૂત) અસત્ત્વનો અભાવ હોઈ, 'સત્ નહીં તે અસત્' આવા પ્રસજ્યપ્રતિષેધમાં પણ પરદ્રવ્યાદિરૂપે સત્‌નો જ નિષેધ છે. વળી તેનો ( પરદ્રવ્ય આદિરૂપે વિદ્યમાન પટ આદિનો સ્વદ્રવ્યાદિરૂપે વિદ્યમાન ઘટમાં પ્રતિષેધ કરાય છે. પરરૂપ આદિથી અવચ્છિન્ન વિદ્યમાનતાનો ઘટમાં અભાવ હોવાથી તે પણ અસત્ત્વ, નિરૂપાખ્ય-નિઃસ્વભાવ નથી, કેમ કે—તેના સ્વરૂપ સત્ત્વનો અનુવેધવ્યાપ્તિ છે. ખરેખર, સત્ત્વાભાવ ઘટાત્મક છે, તેથી તેના સત્ત્વથી તે અનુવિદ્ધ છે, માટે નિરૂપાખ્ય ઘટ નથી. ) પટ આદિનું તે ઘટમાં અસત્ત્વ હોઈ, તે પટ આદિ સ્વરૂપમાં સત્ત્વનો અનુવેધ હોવાથી, તે અસત્ત્વ નિરૂપાખ્ય નથી જ, માટે તે પક્ષમાં કેંકેલ દોષનો પ્રસંગ નથી. પર્યુદાસપક્ષનો દોષ તો અસ્વીકારથી જ ખંડિત થઈ જાય છે. તથાચ સદ્—અસદ્ આત્મક વસ્તુ છે. ત્યાં (ખરેખર, ઘટ સ્વરૂપથી છે. પરરૂપ આદિથી અવચ્છિન્ન પટ આદિ આત્મક તો થતો નથી. વળી આ પ્રમાણે સત્ત્વ અને તેનો પ્રતિષેધ ઘટ સ્વરૂપ છે. એથી સત્ત્વ અસત્ત્વથી અનુવિદ્ધ છે અને અસત્ત્વ સત્ત્વથી અનુવિદ્ધ છે.) સ્વરૂપ સત્ત્વની સાથે અસંબદ્ધ પરરૂપથી અસત્ત્વ નથી, અથવા પરરૂપ અસત્ત્વની સાથે અસંબદ્ધ સ્વરૂપથી સત્ત્વ નથી. વળી આ બન્નેનું એકત્વ જ સમજવાનું નથી, કેમ કે—વિરોધ વગર સારી રીતે ઉભયની ઉપલબ્ધિ (અનુભવ) છે. વળી નાના(અનેક)પણું જ સમજવાનું નથી, કેમ કે—તથાપ્રકારની ઉપલબ્ધિ નહીં હોવાથી તેની વ્યવસ્થાનો અભાવ છે; માટે પરસ્પર અનુવિદ્ધ, ભેદ—અભેદવૃત્તિ તે સ્વભાવવાળું તે વિશિષ્ટ ઉભય જ છે. અન્યથા, જો એમ ન માનો, તો વસ્તુગત વિશિષ્ટતા ઉપપન્ન થતી નથી.

**શંકા**—ભલે ! સત્ત્વ અને અસત્ત્વ વસ્તુ ધર્મ હો ! પરંતુ તે સત્ત્વ અને અસત્ત્વમાં વસ્તુનું સ્વરૂપપણું કેવી રીતે ? તે આ પ્રમાણેઃ—

(૧) શું ધર્મ અને ધર્મીનો ભેદ છે ? અથવા (૨) અભેદ છે ? કે (૩) ભેદાભેદ છે ?

(૧) પહેલો પક્ષ નથી ઘટતો, કેમ કે—સત્ત્વ અને અસત્ત્વમાં ભેદ હોઈ વસ્તુમાં સદ્—અસદ્ આત્મકપણાનો અસંભવ છે.

(૨) બીજો પક્ષ પણ સંભવતો નથી, કેમ કે—એકધર્મીની સાથે અભિન્ન હોવાથી તે સત્ત્વ અને અસત્ત્વમાં એકતાની આપત્તિ છે, કેમ કે—'તદ્ ભિન્નભિન્નસ્ય તદ્ ભિન્નત્વ'ના

નિયમથી સત્ત્વથી અભિન્ન ધર્મીથી અભિન્ન અસત્ત્વ હોઈ સત્ત્વ-અસત્ત્વ એક થઈ જાય છે. જેમ કે-તે ધર્મીનું સ્વરૂપ. અથવા ધર્મીનો ભેદ થઈ જાય! કેમ કે-સત્ત્વ અને અસત્ત્વનો ભેદ છે.

(૩) ત્રીજો પક્ષ પણ બરોબર નથી, કેમ કે-જે આકારથી ભેદ છે, તે આકારથી સર્વથા ભેદ છે: જે આકારથી અભેદ છે, તે આકારથી સર્વથા અભેદ છે. તે પ્રકારે પણ એકમાં ભેદાભેદરૂપ ઉભયરૂપતાનો અસંભવ છે.

વળી જે આકારવડે જ ભેદ છે, તે આકારવડે જ અભેદ છે: જે આકારથી અભેદ છે, તે આકારથી ભેદ છે-એમ કહેવું વ્યાજબી નથી, કેમ કે-વિરોધ છે ને?

**સમાધાન**-પહેલાના બે પક્ષમાં કહેલા દોષો અસ્વીકાર માત્રથી તિરસ્કૃત છે, કેમ કે-ભેદાભેદપક્ષનો જ માત્ર સ્વીકાર છે. આ વિશિષ્ટ ભેદાભેદનો પરસ્પર વ્યાપ્તિભાવ હોઈ આનું જાત્યંતર આત્મકપણું છે, માટે કેવળ ભેદાભેદપક્ષના ખંડનમાં કહેલ દોષનો અવતાર અહીં નથી. તેથી જે આકારથી ભેદ, તે આકારથી ભેદ જ અને જે આકારથી અભેદ, તેથી અભેદ જ છે.

આ વિષય અનેકાન્તવાદના અત્યંત પરિત્યાગનો સૂચક છે, કેમ કે-અભેદના અનુવેધ વગરનો કેવળ ભેદ અને ભેદથી અવ્યાપ્ત કેવળ અભેદની અપ્રસિદ્ધિ છે.

વળી 'જે આકારથી ભેદ, તેથી અભેદ' ઈત્યાદિ વચન વ્યાજબી નથી, કેમ કે-સર્વથા એકનિમિત્તજન્યત્વમાં બે ભેદાભેદ ઉપપન્ન થઈ શકતા નથી.

**શંકા**-તો પછી ધર્મ-ધર્મીનો ભેદાભેદ કેવી રીતે?

**સમાધાન**-ધર્મ-ધર્મીનો ભેદાભેદ એટલે કથંચિદ્ ભેદ, કથંચિત્ અભેદ. આ પ્રમાણે ગ્રહણ કરો!

(૧) કથંચિત્ ભેદ=ધર્મોનો પરસ્પર ભેદ હોવાથી અને પ્રતિનિયત ધર્મીને આશ્રિત હોવાથી કથંચિત્ ભેદ છે, કેમ કે-ધર્મોના ધર્મી સાથે સર્વથા એકત્વમાં ધર્મપણાએ પણ ભેદનો અસંભવ છે.

(૨) કથંચિત્ અભેદ=ધર્મો જ અભ્યંતરમાં કરેલ (ગૌણરૂપે) ધર્મીસ્વરૂપવાળા હોઈ, ધર્મીઓ પણ અભ્યંતરમાં કરેલ (ગૌણરૂપે) ધર્મસ્વરૂપવાળા હોઈ કથંચિત્ અભેદ છે, કેમ કે-અત્યંત ભેદમાં ધર્મ-ધર્મીની કલ્પનાનો અસંભવ છે-અતિપ્રસંગ છે.

(સ્વભાવ, ધર્મ હોવાથી ધર્મ-ધર્મીના એકાન્ત ભેદમાં ધર્મી નિઃસ્વભાવ થઈ જાય! તથાચ જ્ઞેયત્વ આદિ ધર્મનો અનુવેધ નહીં હોવાથી ધર્મીનો અભાવનો પ્રસંગ, તે ધર્મીના અભાવથી જ ધર્મો નિરાશ્રય હોવાથી, આશ્રય વગર ગ્રહણનો અસંભવ હોઈ, અભાવનો પ્રસંગ, એ અતિપ્રસંગપદનો અર્થ છે.)

અનુવૃત્તિવાળી, વ્યાવૃત્તિવાળી વસ્તુ પ્રત્યક્ષ સિદ્ધ હોઈ ભેદાભેદ કલ્પનારૂપ નથી પણ

કથંચિદ્ ભેદાભેદરૂપ સત્ય છે. જ્ઞાનથી ગમ્ય વસ્તુ વ્યવસ્થા છે. ભેદાભેદાત્મકપણું સંવેદન-વિષય થતું નથી, કેમ કે-ઉભયરૂપ સંવેદનનો અભાવ છે ને ? આવી આશંકામાં કહે છે કે-અનુભવ તો સામે રહેલ ઘટાદિમાં તદ્-અતદ્રૂપે જ પેદા થાય છે. અન્યથા, તદ્-અતદ્રૂપ અનુભવની જો ઉત્પત્તિ ન માનવામાં આવે, તો વસ્તુના અભાવનો પ્રસંગ છે.

શંકા-દ્રવ્યત્વથી અવચ્છિન્ન જીવ આદિના સત્ત્વ-અસત્ત્વ આદિ રૂપ સપ્તભંગીના સાધનમાં શું સ્વદ્રવ્ય છે? શું પરદ્રવ્ય છે? કેમ કે-સ્વદ્રવ્યાદિથી અવચ્છિન્ન ભેદની અપ્રસિદ્ધિ હોવાથી પરત્વ અને તેના અભાવમાં સ્વત્વ વાણીથી અવાચ્ય છે ને ?

**સમાધાન**-સ્વદ્રવ્ય અને પરદ્રવ્યનો વાણીથી વિવેક કરી શકાય છે. તે આ પ્રમાણે-શુદ્ધ દ્રવ્ય સ્વ છે, જે સત્ત્વનું અવચ્છેદક છે અને અશુદ્ધ પર-અસત્ દ્રવ્ય છે, જે અસત્ત્વનું અવચ્છેદક છે.

૦ વળી ભેદપ્રધાન વ્યવહાર સાક્ષિક, અભેદપ્રધાન નિશ્ચય સાક્ષિક અખંડ ઉપાધિ (ધર્મ)રૂપ અશુદ્ધત્વ અને શુદ્ધત્વ છે.

શંકા-શુદ્ધ દ્રવ્ય(વસ્તુ)માં સ્વ-પરદ્રવ્યની વ્યવસ્થા કેવી રીતે ? કેમ કે-તે શુદ્ધ દ્રવ્ય દ્રવ્ય-ક્ષેત્ર-કાળ-ભાવ આત્મક છે ને ?

(ત્રૈકાલિક પર્યાયગમનરૂપ દ્રવ્યત્વ, ત્રૈકાલિક આધેયના આધારત્વ, ત્રૈકાલિક સ્થિતિજ્ઞાપકત્વ, ત્રૈકાલિક પર્યાયવત્ત્વ હોઈ, દ્રવ્યાદિ આત્મકે સત્તા જ દ્રવ્ય-ક્ષેત્ર-કાળ-ભાવરૂપે જ વિશેષિત કરાય છે.)

**સમાધાન**-સકળ દ્રવ્ય-ક્ષેત્ર-કાળ-ભાવરૂપ વ્યાપક 'સ્વદ્રવ્ય' (વસ્તુ) છે. વિકલ-દેશરૂપ દ્રવ્ય-ક્ષેત્ર-કાળ-ભાવ અવ્યાપક 'પરદ્રવ્ય' છે. આમ સ્વીકારવાથી શુદ્ધ (સકળ) વસ્તુમાં સ્વ-પરવ્યવસ્થા છે. આ પ્રમાણે બીજે ઠેકાણે પણ સમજવું.

अथ स्ववृत्त्यसाधारणधर्म एव स्वरूपमित्युक्त्वा पुनरिदानीमन्येऽपि घटस्य स्वरूपाः पररूपाश्च भवन्तीत्यभिप्रायेणाह—

**एवं तन्निष्ठाः स्थौल्यादिधर्मवर्त्तमानकालीनपर्यायपृथुबुध्नोदराद्याकाररूपादिगुणघटनक्रियाकर्तृत्वादयस्स्वरूपा अन्ये पररूपा बोध्याः ॥ सूत्र-३१ ॥**

**एवमिति** । तन्निष्ठा इति, घटनिष्ठा इत्यर्थः । स्थौल्यादिधर्मेति, स्थौल्यादयो धर्माः, वर्त्तमानकालीनपर्यायविशेषाः, पृथुबुध्नोदराद्याकाराः, रूपादिगुणाः, घटनक्रियाकर्तृत्वमित्यादयस्स्वरूपास्तद्भिन्नाः पररूपा इत्यर्थः । घटमात्रस्य पूर्वं स्वपररूपमुपदर्श्य घटविशेषस्य तद्दर्शयितुं वा प्राहैवमिति । तन्निष्ठा इति, तत्तद्घटनिष्ठा इत्यर्थ', अयं भावः, घटत्वाक्रान्ते हि घटविशेषे योऽयं स्थौल्यादिधर्मस्स तस्य स्वरूपं घटान्तरनिष्ठो धर्मविशेषः पररूपम्, घटोऽयं स्थौल्यादिस्वरूपेणास्ति, अन्यघटनिष्ठधर्मेण नास्ति, स्वरूपेणाप्यसत्त्वे घटोऽयमसन् स्यात्, पररूपेणास्तित्वोपगमे सर्वघटानामैक्यप्रसङ्गेन सामान्याश्रयव्यवहारविलोपप्रसङ्गः । अनेकघटवृत्तिसामान्याभावात् । प्रतिक्षणं घटादौ सजातीयपरिणामोत्पत्तेरिसद्धान्तसिद्धतया ऋजुसूत्रनयतो वर्त्तमानक्षणवृत्तिघटपर्यायो घटस्य स्वरूपं, अतीतानागतक्षणनिष्ठ

घटपर्यायाः पररूपं, तथा च वर्त्तमानकालीनपर्यायेण घटोऽस्ति, क्षणान्तरवृत्तिपर्यायेण च नास्ति, तेन रूपेणापि सत्त्वे घटस्यैकक्षणावृत्तित्वं स्यात् स्वीयरूपेणाप्यसत्त्वे घटव्यवहारस्यैव विलोपापत्तिः, विनष्टानुत्पन्नघटव्यवहाराभाव इव । अथवा पूर्वोत्तरकुसूलकपालाद्यवस्थाकलापो मध्यवर्त्तिघटस्य पररूपं मध्यवर्त्तिघटपर्यायः स्वरूपं तथा च यदि तादृशपररूपेणापि स्यात्तदा कुसूलाद्यवस्थायां तदुपलब्धिप्रसङ्गो घटपर्यायोत्पत्तिविनाशार्थं प्रयत्नवैफल्यप्रसङ्गश्च स्यात् । यदि च स्वरूपेणापि न स्यात्तर्हि तत्कार्यजलाहरणादिकमपि नोपलभ्येत । कालविशेषावस्थायिनि क्षणमात्रवर्त्तिनि वा घटे वर्त्तमानो यः पृथुबुध्नोदराद्याकारस्स तस्य स्वरूपं, इतराकारः पररूपम्, स्वरूपेण सोऽस्ति पररूपेण च नास्ति, उभयथापि सत्त्वे तद्वद् इतरेषां व्यवहारप्रसङ्गः, आकारविशेषसत्त्वाधीनत्वाद्व्यवहाराणाम् । उभयथापि नास्तित्वे घटासत्त्वप्रसङ्गः । रूपविशिष्टो घटश्चक्षुर्ग्राह्य इति व्यवहारे रूपद्वारा घटो गृह्यत इति रूपं घटस्य स्वरूपं, न रसादिमुखेन चक्षुर्ग्राह्य इति रसादिकं पररूपं, तथा च स स्वरूपेणास्ति पररूपेण च नास्ति, उभयथापि सत्त्वे रसस्यापि चक्षुर्जन्यज्ञानविषयत्वापत्त्या रसनादीन्द्रियकल्पना व्यर्था स्यात् । उभयथापि नास्तित्वे घटस्याग्रहणप्रसङ्गः रूपादिज्ञाननियतत्वाद्घटादिज्ञानस्य । समभिरूढनयार्पणतः शब्दभेदेऽप्यर्थभेदध्रौव्येण घटकुटादिशब्दानामर्थभेदोऽस्ति तथा च घटत इति व्युत्पत्त्या घटनक्रियाकर्तृत्वं घटस्य स्वरूपं भवति, इतरच्च पररूपं भवति, घटश्च तेन रूपेणास्ति पररूपेण च नास्ति, उभयथापि सत्त्वे भिन्नप्रवृत्तिनिमित्ताभावेन शब्दभेदो न स्यात्, उभयथाप्यसत्त्वे घटादिशब्दानां निरर्थकत्वापत्तेः । एवं सम्मत्याद्यनुसारेण नामस्थापनाद्रव्यभावभिन्नेषु विधित्सिताविधित्सितप्रकारेण सत्त्वासत्त्वे ताभ्याञ्च युगपदवाच्यत्वं भाव्यं, व्यतिरेके च प्रतिनियतव्यवहारोच्छेदो बाधकः । अत्रायं क्रमोऽवसेयः नामस्थापनाद्रव्यभावभिन्नेषु घटादिषु विधित्सिताविधित्सितप्रकारेण सत्त्वासत्त्वे, स्वीकृतप्रतिनियताकारे नामादिके घटादौ संस्थानमादाय, स्वीकृतप्रतिनियतसंस्थानादिके मध्यमावस्थारूपवर्त्तमानकालीनपर्यायमादाय, ततो मध्यमावस्थारूपे तस्मिन् वर्त्तमानावर्त्तमानक्षणपर्यायमादाय, क्षणपरिणतिरूपे च चक्षुर्जन्यज्ञानविषयत्वाविषयत्वाभ्यां, लोचनप्रतिपत्तिविषये तस्मिन्नेव घटतदितरशब्दवाच्यत्वावाच्यत्वाभ्यां, घटशब्दाभिधेये च हेयोपादेयान्तरङ्गबहिरङ्गोपयोगानुपयोगरूपतया, उपयुक्ते त्वभिमतार्थबोधकत्वानभिमतार्थबोधकत्वाभ्यां विज्ञेये इति ॥

## ઘટના સ્વરૂપો અને પરરૂપો.

હવે સ્વમાં વર્ત્તમાન અસાધારણ ધર્મ જ સ્વરૂપ છે—એમ કહીને, બીજા પણ ઘટના સ્વરૂપો અને પરરૂપો હોય છે. એવા અભિપ્રાયથી કહે છે કે—

---

१. घटादिषु विधित्सितरूपेण सत्त्वमविधित्सितरूपेणासत्त्वं ताभ्यां युगपदवाच्यं विज्ञेयं विपर्यये प्रतिनियतव्यवहारोच्छेदो बाधकः, विधित्सिते घटादौ स्वसंस्थानापेक्षया सत्त्वं परसंस्थानापेक्षया चासत्त्वं ताभ्यां युगपदवाच्यत्वमित्येवंरीत्या भङ्गत्रयं प्रमाणात्मकं विज्ञेयमिति भावार्थः । संस्थानमादायेति, तदाकृतिरथौल्यादिधर्ममादायेत्यर्थः । मध्यमावस्थारूपेति, पूर्वोत्तरकुसूलकपालाद्यन्तरालवर्त्तिपर्यायेत्यर्थः स्पष्टमन्यत् ॥

ભાવાર્થ-"ઘટમાં રહેનારા સ્થૂલતા આદિ ધર્મો, વર્ત્તમાનકાલીન પર્યાયવિશેષો, પૃથું-બુધ્ન ઉદર આદિ આકારો, રૂપ આદિ ગુણો, ઘટનક્રિયાકર્તૃત્વ ઈત્યાદિ સ્વરૂપો છે. તેનાથી ભિન્ન પરરૂપો સમજવાં."

**વિવેચન**-પહેલાં ઘટ માત્રનું સ્વ-પરરૂપ દર્શાવી ઘટવિશેષના સ્વ-પરરૂપ દર્શાવે છે.

તે તે ઘટમાં વર્ત્તમાન અર્થાત્ ઘટત્વથી આક્રાન્ત ઘટવિશેષમાં જે સ્થૂલતા આદિ ધર્મો છે, તે તેનું સ્વરૂપ છે. બીજા ઘટમાં રહેલો ધર્મવિશેષ પરરૂપ છે. આ ઘડો સ્થૂલતા આદિ સ્વરૂપથી છે, અન્ય ઘટમાં રહેલ ધર્મથી નથી. સ્વરૂપથી પણ અસત્વ માનતાં, આ ઘડો અસત્ થઈ જાય ! પરરૂપથી અસ્તિત્વના સ્વીકારમાં, સઘળા ઘડાઓની એક્તાના પ્રસંગથી સામાન્યાશ્રય વ્યવહારના વિલોપનો પ્રસંગ છે, કેમ કે-અનેક ઘટમાં વર્ત્તમાન સામાન્યનો અભાવ છે.

० ક્ષણે ક્ષણે ઘટ આદિમાં સજાતીય પરિણામની ઉત્પત્તિ સિદ્ધાન્તસિદ્ધ હોઈ, ઋજુસૂત્રનયની અપેક્ષાએ વર્ત્તમાન ક્ષણવૃત્તિ ઘટપર્યાય ઘટનું સ્વરૂપ છે. અતીત-અનાગત ક્ષણનિષ્ઠ ઘટપર્યાયો પરરૂપ છે. તથાચ વર્ત્તમાનકાલીન પર્યાયથી ઘટ છે, બીજા ક્ષણમાં રહેનાર પર્યાયની અપેક્ષાએ નથી.

જો પરરૂપ કાળની અપેક્ષાએ ઘટનું અસ્તિત્વ સ્વીકારો, તો ઘટ એક ક્ષણવૃત્તિ ન થાય !

જો સ્વરૂપ કાળની અપેક્ષાએ ઘટનું નાસ્તિત્વ માનો, તો ઘટના વ્યવહારના વિલોપની આપત્તિ થાય ! જેમ વિનષ્ટ-અનુત્પન્ન ઘટવ્યવહારનો અભાવ છે તેમ થાય !

० અથવા પૂર્વ-ઉત્તર કુસૂલ-કપાલ આદિ અવસ્થાકલાપ મધ્યવર્તી ઘટનું પરરૂપ છે, મધ્યવર્તી ઘટપર્યાય સ્વરૂપ છે. તથાચ જો તાદૃશ પરરૂપથી પણ અસ્તિત્વ હોય, તો કુસૂલ આદિ અવસ્થામાં ઘટની ઉપલબ્ધિનો પ્રસંગ થાય ! અને ઘટપર્યાયની ઉત્પત્તિ અને વિનાશ માટે પ્રયત્નની નિષ્ફળતાનો પ્રસંગ થઈ જાય !

જો સ્વરૂપથી પણ અસ્તિત્વ ન થાય, તો ઘટકાર્ય-જલાનયન આદિ પણ ઉપલબ્ધ ન થાય !

० કાલવિશેષ સુધી રહેનાર કે ક્ષણ માત્ર રહેનાર ઘટમાં વર્ત્તતો જે પૃથુબુધ્નોદર (સાંકડા મુખવાળો, વચ્ચેથી પહોળો-ગોળ) આકાર આદિ આકાર છે તે, તે ઘટનું સ્વરૂપ છે, બીજો આકાર પરરૂપ છે. સ્વરૂપ આકારની અપેક્ષાએ તે ઘડો છે, પરરૂપ આકારથી તે ઘડો નથી.

જો ઉભય પ્રકારે સત્ત્વ માનવામાં આવે, તો 'તે ઘડો' આવો બીજા ઘડાઓમાં વ્યવહારનો પ્રસંગ આવી જાય ! કેમ કે-વ્યવહારો, આકાર વિશેષ સત્તાને આધીન છે. ઉભય પ્રકારે નાસ્તિત્વ માનવામાં ઘટ માત્રના અસત્ત્વનો પ્રસંગ આવી જાય !

० રૂપથી વિશિષ્ટ ઘડો આંખથી જોઈ શકાય છે. આવા વ્યવહારમાં રૂપદ્વારા ઘડો ગ્રહણયોગ્ય બને છે, માટે ઘટનિષ્ઠરૂપ ઘટનું સ્વરૂપ છે. રસ આદિ દ્વારા ઘટ ચક્ષુગ્રાહ્ય નથી, માટે રસ આદિ ઘટનું પરરૂપ છે. તે ઘડો સ્વરૂપ રૂપથી છે, પરરૂપ રસાદિથી નથી.

ઉભય પ્રકારે પણ અસ્તિત્વ માનતાં રસમાં પણ ચક્ષુજન્યજ્ઞાનવિષયતાની આપત્તિ થવાથી રસના આદિ ઈન્દ્રિયની કલ્પના નિરર્થક થઈ જાય!

ઉભય પ્રકારે પણ નાસ્તિત્વમાં ઘટના અગ્રહણનો પ્રસંગ થઈ જાય, કેમ કે-ઘટાદિ જ્ઞાન રૂપાદિ જ્ઞાનની સાથે નિયત છે.

૦ સમભિરૂઢનયની અપેક્ષાએ શબ્દના ભેદમાં પણ અર્થભેદ ધ્રુવ હોઈ, ઘટ કુટ આદિ શબ્દોનો અર્થભેદ છે. તથાચ 'ઘટતે' ઈતિ. આવી વ્યુત્પત્તિથી જલ આહરણ આદિ ક્રિયાનું કર્ત્તાપણું ઘટનું સ્વરૂપ છે, બીજું પરરૂપ છે.

ઘટનક્રિયાકર્ત્તૃત્વરૂપ સ્વરૂપથી ઘડો છે, પરરૂપથી નથી. ઉભય પ્રકારે પણ અસ્તિત્વમાં ભિન્ન પ્રવૃત્તિના નિમિત્તનો અભાવ હોઈ શબ્દભેદ ન થાય! ઉભય પ્રકારે પણ નાસ્તિત્વમાં ઘટાદિ શબ્દોમાં નિરર્થકતાની આપત્તિ આવી જાય!

આ પ્રમાણે સમ્મતિતર્ક ગ્રંથ આદિ અનુસારે નામ-સ્થાપના-દ્રવ્ય-ભાવથી ભેદવાળા ઘટાદિમાં ચિકીર્ષિત-અચિકીર્ષિત(કરવાની ઇચ્છાના વિષયભૂત અને અવિષયભૂત)ના પ્રકારથી સત્ત્વ અને અસત્ત્વ તથા તે બેથી એકીસાથે અવાચ્યત્વ વિચારવું.

વળી વિપર્યયમાં પ્રતિનિયત (ચોક્કસ) વ્યવહારનો ઉચ્છેદ બાધક-પ્રતિબંધક છે.

[ ઘટ આદિમાં ચિકીર્ષિતરૂપે સત્ત્વ, અચિકીર્ષિતરૂપે અસત્ત્વ, તે બંનેથી એકીસાથે અવાચ્ય જાણવું. વિપર્યયમાં પ્રતિનિયત વ્યવહારનો ઉચ્છેદ બાધક છે. ચિકીર્ષિત ઘટ આદિમાં સ્વસંસ્થાનની અપેક્ષાએ સત્ત્વ અને પરસંસ્થાનની અપેક્ષાએ અસત્ત્વ, તે બેથી એકીસાથે અવાચ્યત્વ. આવી રીતથી ત્રણ ભંગો પ્રમાણ આત્મક જાણવાં. ]

ક્રમ=અહીં આ ક્રમ સમજવાનો છે.

(૧) નામ-સ્થાપના-દ્રવ્ય-ભાવના ભેદવાળા ઘટાદિ પદાર્થોમાં ચિકીર્ષિત-અચિકીર્ષિત પ્રકારથી સત્ત્વ અને અસત્ત્વ છે.

(૨) ત્યાર બાદ તેમાં રહેનાર સ્થૂલતા આદિ ધર્મરૂપ સંસ્થાનની અપેક્ષાએ જેઓએ સ્વીકાર કર્યો છે પ્રતિનિયત આકાર, એવા નામાદિ ભેદ ભિન્ન ઘટાદિમાં ચિકીર્ષિત-અચિકીર્ષિત પ્રકારથી સત્ત્વ-અસત્ત્વ છે.

(૩) ત્યાર બાદ પૂર્વ-ઉત્તર કુસૂલ-કપાલ આદિ મધ્યવર્તી પર્યાયરૂપ મધ્યમ અવસ્થારૂપ વર્ત્તમાનકાલીન પર્યાયને લઈને, સ્વીકૃત પ્રતિનિયત સંસ્થાન આદિ વિશિષ્ટ નામાદિ ભેદ ભિન્ન ઘટાદિમાં ચિકીર્ષિત-અચિકીર્ષિત પ્રકારથી સત્ત્વ-અસત્ત્વ છે.

(૪) ત્યાર બાદ વર્ત્તમાન-અવર્ત્તમાન ક્ષણપર્યાયને લઈને મધ્યમ અવસ્થારૂપ તે ઘટાદિમાં સત્ત્વ-અસત્ત્વ છે.

(૫) ત્યાર બાદ ચક્ષુર્જન્યજ્ઞાન વિષયત્વ અને અવિષયત્વની અપેક્ષાએ ક્ષણપરિણતિરૂપ ઘટાદિમાં સત્ત્વ અને અસત્ત્વ છે.

(૬) ઘટ શબ્દથી અને તેનાથી અન્ય શબ્દથી વાચ્યત્વ-અવાચ્યત્વની અપેક્ષાએ ચક્ષુર્જન્યજ્ઞાનવિષય તે ઘટાદિમાં સત્ત્વ અને અસત્ત્વ છે.

(૭) હેય અને ઉપાદેયની અપેક્ષાએ, અંતરંગ અને બહિરંગની અપેક્ષાએ, ઉપયોગ અને અનુપયોગની અપેક્ષાએ ઘટ શબ્દથી વાચ્ય ઘટાદિમાં સત્ત્વ અને અસત્ત્વ છે.

(૮) અભિમત અર્થબોધકત્વ અને અનભિમત અર્થબોધકત્વની અપેક્ષાએ ઉપયોગના વિષયભૂત ઘટમાં સત્ત્વ અને અસત્ત્વ જાણવાં.

तदेवं स्वरूपपररूपाभ्यां सदसत्त्वं व्यवस्थाप्य द्रव्यावलम्बनेन तदाह—

**एवं शुद्धं मृद्रव्यं घटस्य स्वरूपं, तद्भिन्नं स्वर्णादि परद्रव्यम्, तद्रूपेणापि घटादीनां सत्त्वे द्रव्यस्य प्रतिनियमो न स्यात् ॥ सूत्र-३२ ॥**

**एवमिति,** पूर्वोपदर्शितस्वपररूपप्रकारेणेत्यर्थः, शुद्धं मृद्रव्यमिति मृत्त्वेन लोकप्रसिद्धमित्यर्थः, तेन मृत्तिकामात्रस्य न ग्रहः सुवर्णादीनामपि मृद्द्रव्यत्वेन पररूपत्वासम्भवात् एवञ्च पार्थिवत्वेनेत्यस्यापि लाभः। स्वर्णादीत्यादिनाऽबादीनां ग्रहः। एवञ्च घटः स्वद्रव्येण मृदात्मना पार्थिवत्वेन वाऽस्ति परद्रव्येण स्वर्णादिनाऽबादित्वेन वा नास्तीति भावः। अन्यथेतरेतररूपापत्त्याऽयं मृदात्मकोऽयं स्वर्णात्मक इत्यादिद्रव्यप्रतिनियमो न स्यादित्याशयेनाह तद्रूपेणापीति, स्वर्णादिरूपेणापीत्यर्थः, तथोभयथाप्यसत्त्वे घटादिव्यवहारविलोप इत्यपि बोध्यम्। न चोभयथापि सत्त्वे न द्रव्यप्रतिनियमव्याघातः तथाहि अनेकद्रव्यनिष्ठस्यापि सयोगविभागादेर्न द्रव्यप्रतिनियमव्याघातो घटपटसंयोगस्य घटात्मना पटात्मनापि सत्त्वादथ च तयोरेव संयोग इति नियमाच्चेति वाच्यम्, तस्यानेकद्रव्यगुणत्वेनानेकद्रव्यस्यैव स्वद्रव्यत्वात् स्वानधिकरणद्रव्यान्तरस्य च परद्रव्यत्वात् तथा च स्वद्रव्यापेक्षयाऽस्तित्वाभावेऽयं संयोगोऽनयोरेवेति प्रतिनियमो व्याहन्यत एव। अत्रायन्तु विशेषः, अव्यासज्यवृत्तिधर्माणामस्तित्वे स्वसमवायिद्रव्यमात्रापेक्षा, व्यासज्यवृत्तिधर्माणान्तु स्वपर्याप्तिमद्रव्यापेक्षेति ॥

## ઘટનું સ્વરૂપ: તેનાથી ભિન્ન પરદ્રવ્ય.

ઘટવૃત્તિ-અવૃત્તિરૂપ સ્વરૂપ અને પરરૂપથી સત્ત્વ-અસત્ત્વની વ્યવસ્થા કરી, દ્રવ્યની અપેક્ષાએ સ્વરૂપ અને પરરૂપનું વર્ણન.

**ભાવાર્થ**-"શુદ્ધ માટી ઘટનું સ્વરૂપ છે. માટી ભિન્ન સોનું વગેરે પરદ્રવ્ય છે. પરદ્રવ્યરૂપથી પણ ઘટ આદિના સત્ત્વમાં દ્રવ્યનો પ્રતિનિયમ ન થાય!"

**વિવેચન**-અહીં 'મૃદ્' એટલે લોકપ્રસિદ્ધ માટી એમ સમજવું. તેથી મૃત્તિકા માત્રનું ગ્રહણ નહીં થાય. સુવર્ણ આદિ પણ મૃદ્દ્રવ્ય હોઈ પરરૂપ નહીં થઈ શકે. એમ કરવાથી 'પાર્થિવત્વેન' એવો લાભ થશે. અર્થાત્ પાર્થિવત્વેન મૃદ્દ્રવ્યસ્વરૂપ છે. 'સ્વર્ણ આદિ' અહીં આદિપદથી જળ વગેરેનું ગ્રહણ કરવું. એવંચ ઘટ સ્વદ્રવ્ય મૃદ્રૂપે કે પાર્થિવત્વરૂપે છે, પરદ્રવ્યરૂપ સુવર્ણ અથવા જળ આદિ રૂપે નથી. જો સ્વદ્રવ્ય પરદ્રવ્યરૂપે અસ્તિત્વ-નાસ્તિત્વ

ન માનવામાં આવે, તો પરસ્પર રૂપની આપત્તિ થવાથી 'આ માટીરૂપ છે'-'આ સુવર્ણરૂપ છે' ઈત્યાદિ દ્રવ્યનો પ્રતિનિયમ ન થાય! તેમ જ ઉભય પ્રકારે પણ અસત્ત્વ માનતાં ઘટ આદિ વ્યવહારનો વિલોપ થાય! એમ પણ સમજવું.

**શંકા**-સ્વદ્રવ્ય-પરદ્રવ્યરૂપ ઉભય પ્રકારે પણ સત્ત્વ માનવામાં દ્રવ્યના પ્રતિનિયમનો વ્યાઘાત નહીં થાય. તે આ પ્રમાણેઃ-

અનેક દ્રવ્યમાં રહેલ સંયોગ-વિભાગ આદિમાં દ્રવ્યના પ્રતિનિયમનો વ્યાઘાત નથી. ઘટ-પટ સંયોગમાં ઘટરૂપે-પટરૂપે પણ સત્ત્વ હોવાથી 'તે ઘટ-પટનો જ સંયોગ' આ આ પ્રમાણેનો નિયમ છે ને?

**સમાધાન**-તે ઘટ-પટસંયોગમાં અનેક દ્રવ્યનું ગુણપણું હોઈ, અનેક દ્રવ્ય જ સ્વદ્રવ્યરૂપ હોઈ અને પોતાના અનધિકરણ દ્રવ્યાન્તરમાં પરદ્રવ્યપણું છે. અહીં સ્વદ્રવ્યની અપેક્ષાએ અસ્તિત્વના અભાવમાં 'આ બંનેનો જ સંયોગ' છે. આવો નિયમ વ્યાઘાતવિષય બને જ છે. અહીં આ વિશેષ છે. અવ્યાસજ્ય(એક)વૃત્તિ ધર્મોના અસ્તિત્વમાં સ્વસમવાયિ દ્રવ્ય માત્રની અપેક્ષા છે.

વ્યાસજ્ય(દ્વિ આદિ અનેક)વૃત્તિ ધર્મોના અસ્તિત્વમાં સ્વપર્યાપ્તિવાળા દ્રવ્યની અપેક્ષા છે.

क्षेत्रावलम्बनेन ते घटयति—

**एवं घटस्य निजं क्षेत्रं भूतलादि परक्षेत्रं तद्भिन्नं कुडयादि स्वक्षेत्र इव परक्षेत्रेऽपि सत्त्वे क्षेत्रनियमानुपपत्तिप्रसङ्गः ॥ सूत्र-३३ ॥**

**एवमिति ।** क्षेत्रमिति, अधिकरणमित्यर्थं, इहत्यत्वं घटस्य क्षेत्रं तेन रूपेणास्ति तद्भिन्नमिति भूतलादिभिन्नमित्यर्थः स्वानधिकरणदेश इति भावः, स्वानधिकरणदेशाऽवच्छेदेन च नास्तीति तात्पर्यार्थः। उभयथा सत्त्वे इतरेतररूपापत्तिमाह-स्वक्षेत्र इवेति, क्षेत्रनियमानुपपत्तिप्रसङ्ग इति, अस्मिन्नेव क्षेत्रे घटोऽस्ति न तत्क्षेत्र इति नियमभङ्ग इत्यर्थ, उभयथाप्यसत्त्वे तु निराश्रयत्वापत्तिरिति भावः ॥

## ક્ષેત્રના અવલંબનથી સ્વરૂપ-પરરૂપ.

**ભાવાર્થ**-"આ પ્રમાણે ઘટનું પોતાનું ક્ષેત્ર ભૂતલ આદિ છે. તેનાથી ભિન્ન ભીંત આદિ પરક્ષેત્ર છે. સ્વક્ષેત્રમાં સત્ત્વની માફક પરક્ષેત્રમાં પણ સત્ત્વ માનવામાં ક્ષેત્રનિયમની ઉપપત્તિના અભાવનો પ્રસંગ થાય!"

**વિવેચન**-અહીં ક્ષેત્ર એટલે અધિકરણ સમજવાનું છે. 'ઈહત્યત્વ' ઘટનું ક્ષેત્ર છે. તે રૂપથી છે. ભૂતલ આદિથી ભિન્ન સ્વાનધિકરણ દેશના અવચ્છેદથી નથી. ઉભય પ્રકારે સત્ત્વમાં ઈતરેતર રૂપની આપત્તિને કહે છે. આ ક્ષેત્રમાં જ ઘડો છે, તે ક્ષેત્રમાં ઘડો નથી. આવા નિયમનો ભંગ થઈ જાય!

ઉભય પ્રકારે પણ અસત્ત્વમાં તો નિરાધારતાની આપત્તિ છે.

अथ कालमाश्रित्य ते निरूपयति—

**एवं वर्त्तमानकाल एव घटस्य कालः तद्भिन्नातीतादिः परकालः स्वकालवत्परकालेऽपि घटस्य सत्त्वे प्रतिकालनियमानुपपत्तिः प्रसज्येत । इति सप्तभङ्गीनिरूपणम् ॥ सूत्र-३४ ॥**

**एवमिति ।** घटाधिकरणीभूतः कालो घटस्य स्वकालः, तदनधिकरणः भूतकालो ध्वंसकालो वा परकालः, उभयथा घटस्य सत्त्वे दोषमाह स्वकालवदिति, प्रतिकालेति, अस्मिन्नेव काले घटोऽस्ति नातीतादिकाल इति नियतकालव्यवहारो न भवेदेव इष्टापत्तौ तु नित्यत्वापत्तिप्रसङ्गः, उभयथाऽसत्त्वे तस्य सर्वकालसम्बन्धित्वेनावस्तुत्वापत्तिः स्यादिति भावः । ननु घटस्य सत्त्वे यथा स्वरूपादिरवच्छेदकः तथा स्वरूपादौ स्वरूपाद्यन्तरमस्ति न वा ? यदि नास्ति कथं तर्हि तस्य सत्त्वं यद्यस्ति तर्हि कथं नानवस्था ? यदि सुदूरमपि गत्वा गत्यन्तराभावेन कस्यचित्सत्त्वे स्वरूपाद्यनपेक्षयाऽनवस्था वार्यते तर्हि घटादीनां सत्त्वेऽपि तथा भवतु किमनया स्वगृहप्रक्रिययेति मैवम्, वस्तुनो हि यथैवाबाधिता प्रतीतिस्तथैव तद्व्यवस्था, प्रतीतिश्च स्वरूपादिघटितमूर्त्तेरेव सत्त्वादेर्ग्राहिका, अन्यथा नानानिरंकुशविप्रतिपत्तीनां वारयितुमशक्यत्वात् । न च तस्यां स्वरूपादिकमन्यदेव प्रतीयते येन स्वरूपान्तरापेक्षा स्यात् । न च जिज्ञासाधीना हि स्वरूपाद्यपेक्षा तथा च तत्रापि प्रकृत इव जिज्ञासा स्यादेव तथा चास्त्यनवस्थेति वाच्यम्, यत्रैव न सा तत्रैव विश्रान्त्या तदभावात् केनचिन्नयेन स्वरूपादेः स्वरूपत एवावच्छेदकत्वं निर्णयैवास्तित्वादिप्रवृत्तेरनवस्थाया अभावादिति । एतेनैकस्मिन् धर्मिणि सत्त्वासत्त्वरूपौ विधिनिषेधात्मकौ धर्मौ न सम्भवतो विधिमुखप्रत्ययविषयत्वनञुल्लिखितप्रत्ययविषयत्वरूपत्वेन शीतोष्णयोरिव तयोः परस्परं विरोधात्, यत्रास्तित्वं तत्र नास्तित्वस्य यत्र च नास्तित्वं तत्रास्तित्वस्य विरोधात् । तथाऽस्तित्वाधिकरणस्य नास्तित्वाधिकरणस्य च भिन्नत्वेनैकत्र तयोस्सत्त्वे विभिन्नाधिकरणवृत्तित्वरूपवैयधिकरण्यं दोषः स्यात्, तथा येन रूपेणास्तित्वं येन च नास्तित्वं तादृशरूपयोरस्तित्वनास्तित्वनियामकस्वपररूपाद्यन्तरापेक्षायामनवस्थादोषश्च, तथा येन रूपेण सत्त्वं तेनैवासत्त्वस्य येनासत्त्वं तेनैव सत्त्वस्य च प्रसङ्गेन सङ्करः येन रूपेण सत्त्वं तेनासत्त्वमेव स्यान्न तु सत्त्वं येन रूपेण चासत्त्वं तेन सत्त्वमेव स्यान्न त्वसत्त्वमिति व्यतिकरो दोषः, तथा सत्त्वासत्त्वस्वरूपत्त्व इदमित्थमिति निश्चेतुमशक्तेस्संशयो दोषः, ततश्चानिश्चयरूपाप्रतिपत्तिर्दोषः, ततश्च सत्त्वासत्त्वात्मनो वस्तुनोऽभावो दोष इत्यष्टौ दोषास्सम्भवन्तीति प्रत्युक्तम्, स्वपररूपाद्यपेक्षया विवक्षितयोस्सत्त्वासत्त्वयोः प्रतीयमानयोर्वस्तुन्यविरोधात् स्वरूपादिना सत्त्वस्येव पररूपादिनाऽसत्त्वस्यापि प्रतीतिसिद्धत्वेनानुपलम्भप्रयुक्तस्य विरोधस्याभावात् । न च विरोधादेकत्र तयो' प्रतीतिर्मिथ्येति वाच्यम्, परस्पराश्रयात्, विरोधे सति तेन बाध्यमानत्वान्मिथ्यात्वसिद्धिः, सिद्धे च तस्मिन् सत्त्वासत्त्वयोर्विरोधसिद्धिरिति । न च वध्यघातकभावरूपोऽप्यहिनकुलादिवद्विरोधः, तस्यैकस्मिन् काले वर्त्तमानयोस्सम्बन्धे सत्येव भावात्, न ह्यसंयुक्तमहिं नकुलो नाशयति, तथा सति सर्वत्राहेरभावप्रसङ्गात् तथाप्रकृते सति सम्बन्धे बलीयसाऽपरो बाध्यत इति वाच्यं नहि तथा सदसत्त्वयोः क्षणमात्रमपि परेण सत्त्वमेकत्राभ्युपगम्यते तथा च कथं

वध्यघातकरूपो विरोधः, अभ्युपगमे वा तुल्यबलत्वेन तयोर्न वध्यघातकभावः । नापि सहानवस्थानलक्षणो विरोधः, कालभेदेनैकत्र वर्तमानयोः श्यामत्वपीतत्वयोरेव तत्सम्भवात्, उत्पद्यमानो हि पीतं श्यामो विनाशयति, नहि तथाऽस्तित्वं नास्तित्वञ्च पूर्वोत्तरकालभावि, अस्तित्वकाले नास्तित्वाभावे सत्तामात्रं सर्वं प्राप्नुयात्, नास्तित्वकालेऽस्तित्वाभावे तु सत्त्वाश्रयबन्धमोक्षव्यवहारो विरुद्ध्येत, सर्वथाऽसत आत्मलाभासम्भवात् सर्वथा च सतो विनाशासम्भवात् । न चापि प्रतिबध्यप्रतिबन्धकभावरूपो विरोधः, अस्तित्वकाले नास्तित्वस्य प्रतिबन्धकाभावात् । स्वरूपेणास्तित्वकालेऽपि पररूपादिना नास्तित्वस्य प्रतीतिसिद्धत्वात् । सत्त्वासत्त्वयोरेकाधिकरणवृत्तित्वेन प्रतीतत्वाच्च न वैयधिकरण्यं दोषः, नाप्यनवस्थादोषः अनन्तधर्मात्मकस्य वस्तुनः प्रमाणप्रतिपन्नत्वेनापदार्थपरम्पराकल्पनाविरहेण तस्या अभ्युपगमात् नापि संकरव्यतिकरौ प्रतीतिसिद्धेऽर्थे कस्यापि दोषस्याभावात्, दोषाणां प्रतीत्यसिद्धपदार्थविषयकत्वात्, परस्परानुविद्धसत्त्वासत्त्वयोर्जात्यन्तरात्मकत्वेनैकान्तसत्त्वावलम्बिदोषासम्भवाच्च, नवा संशयो दोषः, स हि सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च जायते स्थाणुत्वपुरुषत्वोचिते हि देशे नातिप्रकाशान्धकारकलुषितायां वेलायामूर्ध्वतामात्रं सामान्यं विलोकयतो वक्रकोटरपक्षिनीडादीन् स्थाणुगतान् पुरुषगतांश्च वस्त्रसंयमनशिरःकण्डूयनशिखाबन्धादीन् विशेषाननुपलभमानस्य तेषाञ्च स्मरतः पुरुषस्यायं स्थाणुर्वा पुरुषो वेति संशय उदेति, अनेकान्तवादे च विशेषोपलब्धिरप्रतिहतैव, स्वरूपपररूपादिविशेषाणां प्रत्यर्थमुपलम्भात् तथा च विशेषोपलब्धेः कथं संशयः, अवच्छेदकभेदेनाप्यर्थमाणयोस्सत्त्वासत्त्वयोरेकत्र विरोधाभावेन संशयलक्षणानाक्रान्तत्वात्, एवञ्च संशयमूलकावप्रतिपत्तिवस्त्वभावरूपौ दोषौ दूरापास्ताविति न कोऽपि दोष इति । तदेवं स्वसमयसर्वस्वरूपा सप्तभङ्गी समासतो निरूपितेत्याहेतीति ॥

## કાળની અપેક્ષાએ સ્વરૂપ-પરરૂપનું નિરૂપણ.

**ભાવાર્થ**–"વર્ત્તમાનકાળ જ ઘટનો કાળ છે.' તેનાથી ભિન્ન અતીત આદિ પરકાળ છે. સ્વકાળની માફક પરકાળમાં પણ ઘટના સત્ત્વમાં કાળનો-પ્રતિનિયમની અનુપપત્તિનો પ્રસંગ આવે ! સપ્તભંગીના નિરૂપણની સમાપ્તિ થાય છે."

**વિવેચન**–ઘટનો અધિકરણરૂપ કાળ ઘટનો સ્વકાળ છે. તે ઘટનો અનધિકરણભૂતકાળ અથવા ધ્વંસકાળ પરકાળ છે. ઉભય પ્રકારે ઘટના સત્ત્વમાં દોષ કહે છે કે-'આ કાળમાં જ ઘડો છે, અતીત આદિ કાળમાં નથી.' આવો નિયતકાળનો વ્યવહાર થાય નહિ. ઇષ્ટાપત્તિમાં તો નિત્યત્વની આપત્તિનો પ્રસંગ. ઉભય પ્રકારે અસત્ત્વમાં તેના સર્વ કાળના અસંબંધથી અવસ્તુપણાની આપત્તિ થાય !

**શંકા**–ઘટના સત્ત્વમાં જેમ સ્વરૂપ આદિ અવચ્છેદક છે, તેમ સ્વરૂપ આદિમાં બીજા સ્વરૂપ આદિ છે કે નહીં ? જો નથી. તો કેવી રીતે તેનું સત્ત્વ છે ? જો છે, તો કેમ અનવસ્થા નહિ ?

જો મુદ્દર પણ જઈને બીજી કોઈ ગતિ નહીં હોવાથી, કોઈ એકના સત્ત્વમાં સ્વરૂ-

પાદિની અપેક્ષા વગર અનવસ્થાનું વારણ થાય છે, તો ઘટ આદિના સત્ત્વમાં પણ તેમ થાઓ ! આ પોતાના ઘરની પ્રક્રિયાથી સર્યું ને ?

**સમાધાન**-ખરેખર, વસ્તુની જે પ્રકારે જ અબાધિત પ્રતીતિ છે, તે પ્રકારે જ તેની વ્યવસ્થા છે. વળી પ્રતીતિ, સ્વરૂપ આદિથી ઘટિત મૂર્તિવાળા જ સત્ત્વ આદિની ગ્રહણ કરાવનારી છે.

જો એમ ન માનવામાં આવે, તો અનેક નિરંકુશ વિપ્રતિપત્તિ(વિસંગતિ)ઓનું વારણ અશક્ય બની જાય છે.

તે પ્રતીતિમાં બીજા જ સ્વરૂપ આદિ પ્રતીયમાન થતા નથી, કે જેથી બીજા સ્વરૂપની અપેક્ષા હોઈ શકે !

**શંકા**-ખરેખર, સ્વરૂપ આદિની અપેક્ષા જિજ્ઞાસાને આધીન છે. તથાચ ત્યાં પણ પ્રકૃતમાં જેમ જિજ્ઞાસા થાય છે, તેમ થશે જ. તથાચ અનવસ્થા છે જ ને ?

**સમાધાન**-જ્યાં તે જિજ્ઞાસા નથી, ત્યાં વિશ્રાન્તિ હોવાથી, તે જિજ્ઞાસાના અભાવથી કોઈ એક નયદ્વારા સ્વરૂપ આદિના સ્વરૂપથી જ (સ્વત એવ) અવચ્છેદકપણાનો નિર્ણય કરી, અસ્તિત્વ આદિની પ્રવૃત્તિ હોઈ અનવસ્થાનો અભાવ છે.

## આઠ દોષોનું વર્ણન સાથ નિવારણ.

(૧) **પૂર્વપક્ષ**=(વિરોધ) આ નિરૂપણથી એકધર્મીમાં વિધિનિષેધાત્મક સત્ત્વ અને અસત્ત્વરૂપ બે ધર્મો સંભવતા નથી, કેમ કે-વિધિમુખી પ્રતીતિની વિષયતા નિષેધમુખી પ્રતીતિની વિષયતારૂપ હોઈ, શીતસ્પર્શ અને ઉષ્ણસ્પર્શની માફક તે સત્ત્વમાં અને અસત્ત્વમાં પરસ્પર વિરોધ છે. જ્યાં અસ્તિત્વ છે, ત્યાં નાસ્તિત્વનો અને જ્યાં નાસ્તિત્વ છે, ત્યાં અસ્તિત્વનો વિરોધ છે. એથી જ એક જ પદાર્થમાં અસ્તિત્વ અને નાસ્તિત્વનો સ્વીકાર કરવાથી સપ્તભંગીમાં વિરોધ આવે છે.

(૨) વૈયધિકરણ=અસ્તિત્વ અને નાસ્તિત્વ પરસ્પર વિરૂદ્ધ હોવાથી, અસ્તિત્વના અધિકરણની અને નાસ્તિત્વના અધિકરણની ભિન્નતા હોવાથી, એક જગ્યાએ તે અસ્તિત્વ અને નાસ્તિત્વના સત્ત્વમાં વિભિન્ન અધિકરણવૃત્તિત્વરૂપ વૈયધિકરણ નામક દોષ થાય છે.

(૩) અનવસ્થા=જેમ પ્રત્યેક પદાર્થમાં અસ્તિત્વ અને નાસ્તિત્વ ધર્મ રહે છે, તેમ અસ્તિત્વમાં અને નાસ્તિત્વમાં પણ અસ્તિત્વ અને નાસ્તિત્વ માનવા જોઈએ. માટે અસ્તિત્વ અને નાસ્તિત્વમાં અનંત અસ્તિત્વ અને નાસ્તિત્વ માનવાથી અનવસ્થાદોષ આવે છે, કેમ કે-જે રૂપે અસ્તિત્વ અને જે રૂપે નાસ્તિત્વ છે, તેવા બે રૂપમાં અસ્તિત્વ-નાસ્તિત્વ નિયામક બીજા સ્વરૂપ અને પરરૂપ આદિની અનંત કલ્પનામાં અનવસ્થાદોષ છે. 'अप्रामाणिक पदार्थ परंपरापरिकल्पनाविश्रांत्यभावानवस्था ।'

(૪) સંકર=જે રૂપે સત્ત્વ છે, તે જ રૂપથી અસત્ત્વનો પ્રસંગ અને જે રૂપથી અસત્ત્વ

છે, તે જ રૂપથી સત્ત્વનો પ્રસંગ હોઈ સંકરદોષ છે, કેમ કે–'सर्वेषां युगपत् प्राप्तिःसंकरः' આવું કથન છે.

અસ્તિત્વના અધિકરણમાં અસ્તિત્વ–નાસ્તિત્વ બંને રહેવાથી અને નાસ્તિત્વના અધિકરણમાં નાસ્તિત્વ–અસ્તિત્વ રહેવાનું માનવાથી સંકરદોષ છે. (ખીચડો–શંભુમેળો.)

(૫) વ્યતિકરદોષ=જે રૂપથી સત્ત્વ છે, તે રૂપથી અસત્ત્વ જ થાય પરંતુ સત્ત્વ નહીં! જે રૂપથી અસત્ત્વ છે, તે રૂપથી સત્ત્વ જ થાય પરંતુ અસત્ત્વ નહીં! આવો વ્યતિકર નામનો દોષ આવે છે. અસ્તિત્વ અને નાસ્તિત્વ એકીસાથે રહેવાથી, અસ્તિત્વરૂપથી નાસ્તિત્વ અને નાસ્તિત્વરૂપથી અસ્તિત્વ માનવાથી વ્યતિકરદોષ છે, કેમ કે–'परस्पर विषयगमनं व्यतिकरः' એવું કથન છે.

(૬) સંશય=સત્ત્વ–અસત્ત્વરૂપપણામાં 'આ પ્રમાણે જ છે' આવો નિશ્ચય કરવાની અશક્તિ હોવાથી સંશય આવે છે. વસ્તુમાં અસ્તિત્વ–નાસ્તિત્વમાં કોઈ એક ધર્મનો અસાધારણરૂપે બરોબર નિશ્ચય ન થઈ શકવાથી સંશયદોષ છે. જેમ વસ્તુમાં છીપ–ચાંદીનું નિશ્ચયજ્ઞાન નહીં હોવાથી સંશય છે, તેમ અહીં સમજવું.

(૭) અપ્રતિપત્તિ=સંશય થવાથી વસ્તુનું સાચું જ્ઞાન થઈ શકતું નથી, માટે અનિશ્ચયરૂપ અપ્રતિપત્તિદોષ છે.

(૮) અભાવ=સત્ત્વ–અસત્ત્વ આત્મક વસ્તુનો અભાવરૂપ દોષ છે. વસ્તુનું યથાર્થજ્ઞાન નહીં હોવાથી સ્યાદ્વાદમાં પ્રમાણવિષય–પ્રમેયની વ્યવસ્થાની હાનિરૂપ અભાવદોષ થાય છે.

આ આઠ દોષો સંભવે છે, એમ પ્રતિપક્ષીઓએ કહેલ છે. તેનું ક્રમસર ખંડન શરૂ થાય છે.

**ઉત્તરપક્ષ**=સ્વરૂપ–પરરૂપ આદિની અપેક્ષાએ વિવક્ષિત, પ્રતીતિવિષયભૂત સત્ત્વ અને અસત્ત્વનો વસ્તુમાં અવિરોધ છે, કેમ કે–સ્વરૂપ આદિ દ્વારા સત્ત્વની માફક, પરરૂપ આદિથી અસત્ત્વ પણ, પ્રતીતિસિદ્ધ હોઈ અનુપલબ્ધિજન્ય વિરોધનો અભાવ છે.

**શંકા**–એક સ્થાનમાં તે બંનેની પ્રતીતિ મિથ્યા છે, કેમ કે–વિરોધ છે ને?

**સમાધાન**–અન્યોન્યાશ્રય છે. વિરોધ હોયે છતે, તેનાથી બાધિત થવાથી મિથ્યાત્વસિદ્ધિ. તે મિથ્યાત્વસિદ્ધિ થયે છતે, સત્ત્વ–અસત્ત્વની વિરોધની સિદ્ધિ. આમ પરસ્પરાશ્રયદોષ હોઈ પ્રતીતિ મિથ્યા નથી.

(अ) વધ્યઘાતક ભાવરૂપ પણ સાપ–નોળિયા આદિની માફક વિરોધ નથી. તે વિરોધનો એક કાળમાં વર્તમાન બંનેનો સંબંધ (સંયોગ) હોયે છતે સંભવ છે. ખરેખર, અસંયુક્ત સાપને નોળિયો મારી શકતો નથી. જો સંયોગ વગર નોળિયો સાપને મારે છે એમ માનો, તો સઘળે ઠેકાણે સાપના અભાવનો પ્રસંગ આવશે! તથા પ્રકૃતમાં સંબંધ હોયે છતે અતિ બળવાનથી બીજો બાધિત થાય છે, એમ બોલી શકાય. પરંતુ તેવી રીતે સત્ત્વ–અસત્ત્વમાં ક્ષણ માત્ર પણ 'પરથી સત્ત્વ છે' એમ એક ઠેકાણું સ્વીકાર કરાતો નથી, તો કેવી

રીતે વધ્યઘાતકલક્ષણુ વિરોધ છે? અપેક્ષાદ્વારા એક ઠેકાણે સત્ત્વ–અસત્ત્વના સ્વીકારમાં તુલ્ય બળવાળા હોઈ, તે સત્ત્વ–અસત્ત્વમાં વધ્યઘાતકભાવ નથી.

(ख) સહ અનવસ્થાનરૂપ વિરોધ નથી. કાળભેદથી એક સ્થાનમાં વર્ત્તમાન શ્યામત્વ અને પીતત્વમાં જ સહાનવસ્થાનરૂપ વિરોધનો સંભવ છે. ખરેખર, ઉત્પન્ન થતો શ્યામ પીત-પણાનો વિનાશ કરે છે. તેવી રીતે અહીં અસ્તિત્વ અને નાસ્તિત્વ પૂર્વ–ઉત્તરકાળમાં થનાર નથી. જો અસ્તિત્વના કાળમાં નાસ્તિત્વનો અભાવ સ્વીકારવામાં આવે, તો સઘળું સત્ થઈ જાય! જો નાસ્તિત્વના કાળમાં અસ્તિત્વ માત્રનો અભાવ સ્વીકારવામાં આવે, તો સત્ત્વના આધારભૂત બંધ અને મોક્ષનો વ્યવહાર વિરૂદ્ધ થશે! સર્વથા અસત્‌માં આત્મલાભ(સ્વરૂપ-લાભ)નો અસંભવ છે, સર્વથા સત્‌માં વિનાશનો અસંભવ છે.

(क) પ્રતિબધ્ય પ્રતિબંધક ભાવરૂપ વિરોધ પણ નથી. ચંદ્રકાન્તમણિ અને દાહમાં પરસ્પર પ્રતિબધ્ય પ્રતિબંધક વિરોધ છે, કેમ કે–દાહ પ્રત્યે પ્રતિબંધક ચંદ્રકાન્તમણિ રહેતે છતે અગ્નિથી દાહ ઉત્પન્ન થતો નથી. દાહ અને ચન્દ્રકાન્તમણિની માફક અસ્તિત્વ અને નાસ્તિત્વમાં પ્રતિબધ્ય પ્રતિબંધકરૂપ વિરોધ નથી, કેમ કે–જે સમયે પદાર્થમાં અસ્તિત્વધર્મ છે, તે જ સમયમાં પરદ્રવ્ય આદિની અપેક્ષાએ નાસ્તિત્વધર્મ હાજર છે. તેવી રીતે જે સમયે પરદ્રવ્ય આદિની અપેક્ષા નાસ્તિત્વધર્મ છે, તે સમયે સ્વદ્રવ્ય આદિની અપેક્ષા અસ્તિત્વધર્મ હાજર છે; કેમ કે-સ્વરૂપથી અસ્તિત્વના કાળમાં પણ પરરૂપ આદિથી નાસ્તિત્વ પ્રતીતિસિદ્ધ છે.

(૧) એથી જ અસ્તિત્વ અને નાસ્તિત્વમાં વિરોધ નહીં રહેવાથી, અસ્તિત્વ અને નાસ્તિત્વ એક અધિકરણવૃત્તિ હોવાથી વૈયધિકરણ્ નામક દોષ નથી.

(૨) અનવસ્થા નામક દોષ નથી આવતો, કેમ કે–અનંતધર્માત્મક વસ્તુ પ્રમાણથી પ્રતિપન્ન હોઈ અપદાર્થ પરંપરાની કલ્પનાનો અભાવ છે, (પ્રત્યેક વસ્તુમાં અનેક ધર્મ પ્રમાણથી સિદ્ધ છે. જેમ માતા–પિતાની પરંપરા પ્રમાણસિદ્ધ છે, તેમ સપ્તભંગી પ્રમાણસિદ્ધ છે. એથી જ કેવળ કલ્પના અનંત હોવાથી સ્યાદ્વાદમાં અનવસ્થાદોષ આવી શકતો નથી. જેમ ઘટત્વ ધર્મમાં ઘટત્વત્વ ધર્મની કલ્પના કરાતી નથી, તેમ અસ્તિત્વ આદિમાં પણ બીજા અસ્તિત્વ આદિની કલ્પના કરી શકાતી નથી.) પણ સાચી અનવસ્થાનો સ્વીકાર છે, માટે દુષ્ટ અનવસ્થાનો સ્વીકાર નથી.

(૩–૪–૫) સંકર અને વ્યતિકર નામનો દોષ નથી, કેમ કે–પ્રતીતિસિદ્ધ અર્થમાં કોઈ પણ દોષનો સંભવ નથી. દોષો પ્રતીતિથી અસિદ્ધ પદાર્થવિષયવાળા હોય છે. પરસ્પર અનુવિદ્ધ સત્ત્વ–અસત્ત્વ, જાત્યંતર આત્મક હોઈ એકાન્ત સત્ત્વના આલંબનવાળા દોષનો અસંભવ છે.

(અસ્તિત્વ–નાસ્તિત્વ અવિરોધી સિદ્ધ હોવાથી અસ્તિરૂપને નાસ્તિ કહેવાતું નથી, માટે સંકર નથી. અસ્તિને નાસ્તિ અને નાસ્તિને અસ્તિ કહેવાતું નથી, માટે વ્યતિકરદોષ નથી; કેમ કે–વસ્તુ સ્વચતુષ્ટયથી અસ્તિરૂપ અને પરચતુષ્ટયથી નાસ્તિરૂપ છે.)

(૯) સંશયદોષ લાગુ પડતો નથી. ખરેખર, તે સંશય સામાન્યના પ્રત્યક્ષથી, વિશેષના અપ્રત્યક્ષથી અને વિશેષના સ્મરણથી પેદા થાય છે.

સ્થાણુપણાને અને પુરુષપણાને ઉચિત દેશમાં અતિ પ્રકાશથી રહિત-અંધકારથી કલુષિત-કાળમાં ઉંચાઈ માત્રરૂપ સામાન્યને જોતાં, સ્થાણુગત વક્ર-કોટર (મુખરૂપ બખોલ)-પક્ષીનો માળો વગેરેને અને પુરુષગત વસ્ત્રનું આચ્છાદાન, માથું ખંજવાળવું, ચોટલીબંધન વગેરે વિશેષોને નહિ મેળવનાર કે જાણનાર પુરુષને તથા તે બંનેના વિશેષોને સ્મરણ કરનાર પુરુષને, આ સ્થાણુ છે કે પુરુષ છે?-આવો સંશય ઉગે છે.

સાધકપ્રમાણના અભાવથી અને બાધકપ્રમાણના અભાવથી અનિશ્ચિત અનેક અંશોનું અવગાહિજ્ઞાન સંશય છે.

૦ અનેકાન્તવાદમાં વિશેષની ઉપલબ્ધિ (સાક્ષાત્કાર) અપ્રતિહત જ છે, કેમ કે-સ્વરૂપ-પરરૂપ આદિ વિશેષોની પ્રત્યેક પદાર્થમાં ઉપલબ્ધિ છે. તથાચ વિશેષોની ઉપલબ્ધિમાં કેમ સંશય સંભવે? કેમ કે-અવચ્છેદકના ભેદથી વિવક્ષાના વિષયભૂત સત્વ-અસત્ત્વનો એક ઠેકાણે વિરોધ નહીં હોવાથી સંશયના લક્ષણનું આક્રમણ નથી. વળી આ પ્રમાણે સંશયના મૂળવાળા અપ્રતિપત્તિદોષનો અને વસ્તુવ્યવસ્થાના અભાવરૂપ દોષનો અભાવ છે.

(એથી જ સાધર્મ્યની માફક અસ્તિત્વધર્મનો નાસ્તિત્વધર્મની સાથે અવિનાભાવ સંબંધ છે, કેમ કે-વિશેષણ છે. જેમ સાધર્મ્ય વૈધર્મ્યનો અવિનાભાવી છે, તેમ અસ્તિત્વ-નાસ્તિત્વધર્મ અસ્તિત્વ સિવાય રહી શકતો નથી. એથી જ અસ્તિત્વ અને નાસ્તિત્વનો અવિનાભાવી સંબધ હોવાથી સ્યાદ્વાદમાં ઉક્ત વિરોધ આદિ દોષ આવી શકતા નથી. જે એકાન્તવાદી લોક અસ્તિત્વ-નાસ્તિત્વ, સામાન્ય-વિશેષને પરસ્પર નિરપેક્ષ માને છે, તેઓના મતમાં વિરોધ આદિ દોષો આવે છે.)

[ઘટ વગેરે દ્રવ્યથી જે છે, તે પાર્થિવ આદિ દ્રવ્યની અપેક્ષાએ ઘટ માટીનો વિકાર હોઈ પાર્થિવરૂપે છે, કરા વગેરે જળનો વિકાર હોઈ જળરૂપે છે. એવી રીતે બીજાઓ પોતાના ઉપાદાનભૂત દ્રવ્યરૂપે છે, પરંતુ ઘટ જળરૂપે, કરા વગેરે માટીરૂપે એટલે પરદ્રવ્ય-રૂપે નથી. જો પરરૂપે છે-એમ માનો, તો ઘટ જળની બનાવટ, કરા વગેરે માટીની બનાવટ થતાં સઘળી વસ્તુ સર્વ આત્મક બની જશે, એવી આપત્તિ આવશે.

પાટલિપુત્રક આદિ ગામમાં રહેલ ઘટાદિનું, તે તે ક્ષેત્રની સાથે આધાર-આધેયભાવના અનુરોધથી કથંચિત્ તે તે ક્ષેત્રની સાથે તાદાત્મ્ય સ્વીકારવું જોઈએ, કેમ કે-કથંચિત્ તાદાત્મ્ય કથંચિત્ સર્વસંબંધવ્યાપક છે, જેથી વિશિષ્ટ બુદ્ધિનિયામક સંબંધ છે. વળી જેથી વિશિષ્ટ બુદ્ધિ થતી નથી, તે સંબંધ જ થતો નથી: અને વિશિષ્ટ બુદ્ધિ વિશિષ્ટરૂપ વિષય હોયે છતે જ થઈ શકે છે તથા વિશિષ્ટ વિષય વિશેષણ વિશેષ્યની સાથે કથંચિત્ અભિન્ન જ છે. ભિન્નત્વમાં, વિશિષ્ટ રૂપ-દંડવિશિષ્ટ પુરુષ-ક્ષેત્રવિશિષ્ટ પુરુષ આદિમાં વિશેષણ

